

# शिक्षाधारा
## SHIKSHADHARA
Annual Magazine of Department of Education




G20 भारत 2023 INDIA




**प्रधानसम्पादकः**
आचार्यः सि.एस्.एस्. नरसिंहमूर्तिः

**सम्पादकः**
आचार्यः रामचन्द्रुल बालाजी

**सहसम्पादकौ**
डा. दयानिधि शर्मा डा. रामजियावनः






## केन्द्रीयसंस्कृतविश्वविद्यालयः
(संसद अधिनियमेन स्थापितः भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः)
राष्ट्रियमूल्याङ्कनपरिषदा "A++"श्रेणी प्रत्यायितः
## राजीवगान्धीपरिसरः
शृङ्गेरी – 577139, कर्णाटकम्

2023



# शिक्षाधारा

## SHIKSHADHARA

Annual Magazine of Department of Education




G20
भारत 2023 INDIA


प्रधानसम्पादकः
आचार्यः सि.एस्.एस्. नरसिंहमूर्तिः

सम्पादकः
आचार्यः रामचन्द्रुल बालाजी

सहसम्पादकौ
डा. दयानिधि शर्मा डा. रामजियावनः






केन्द्रीयसंस्कृतविश्वविद्यालयः
(संसद अधिनियमेन स्थापितः भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः)
राष्ट्रियमूल्याङ्कनपरिषदा "A++"श्रेणी प्रत्यायितः
राजीवगान्धीपरिसरः
शृङ्गेरी – 577139, कर्णाटकम्

2023

# जेगीयतां सन्ततम्




'तमसो मा ज्योतिर्गमय' इत्यौपनिषदं वचः। ज्ञानसमुपार्जनमेव मनुष्यस्य परमं लक्ष्यमिति विदितचरमेव समेषाम्। अधीतायाः विद्यायाः अन्यसङ्क्रान्तिरेव परमं प्रयोजनम् इति वयं विश्वसिमः। तत्र प्रशिक्षणकौशलानां समाहार एव शिक्षाशास्त्रमिति व्यवह्रियते। अतः साम्प्रतिके समाजे तच्छास्त्रस्यापि महत्त्वं वर्वर्ति।

प्रतिहायनमिव ऐषमः '**शिक्षाधारा**' इति वार्षिकी पत्रिका प्राकाश्यं नीयते तद्विभागीयैः। तत्र छात्राध्यापकानाम्, आचार्याणाञ्च लेखाः विराजन्ते। पत्रिकेयं शारदाचन्द्रमौलीश्वर-योरसीमानुकम्पया जगद्गुरूणां श्री श्री भारतीतीर्थमहास्वामिनां तथा जगद्गुरूणां श्री श्री विधुशेखरभारतीमहास्वामिनाञ्च कृपाकटाक्षवीक्षणेन च समेधतां इत्याशासे। लेखकेभ्यः सर्वेभ्यो अभिनन्दनानि शुभाशिषञ्च वितीर्यन्ते।

॥ इति शम् ॥

(प्रो. सि. एस. एस. एन. मूर्ति)
निदेशकः

# शुभाशंसनम्



संस्कृतवाङ्मयं ज्ञानस्य अमूल्यनिधिः वर्तते। तस्मिन् महति वाङ्मये शिक्षाशास्त्रस्यापि 'बहवो बिन्दवः समुपलभ्यन्ते। तैत्तिरीयोपनिषदि; तत्रापि शिक्षावल्यां शिक्षाशास्त्रस्य आधारभूतानि तत्त्वानि प्रतिपदम् अवलोक्यन्ते इति विदितमेव सर्वैः शिक्षाविद्भिः। विशेषेण शिक्षणप्रक्रियायाः कौशलस्य प्रशिक्षणस्य च समावेशः शिक्षाशास्त्रे दृश्यते। तदेव शिक्षावल्याम् **"आचार्यः पूर्वरूपम् अन्तेवास्युत्तररूपम्"** इत्यादिभिः वाक्यैः सम्यक् न्यरूपि। एवं सति उत्तमाध्यापकानां पाठनप्रक्रियासर्वस्वं शिक्षाशास्त्रे वर्वर्ति। तस्मात् शिक्षाशास्त्रस्य विकासमुपलक्ष्य प्रशिक्षणार्थिनां लेखनकौशलविकासमुपलक्ष्य च प्रतिवर्षमिव अस्मिन् वर्षे अपि **'शिक्षाधारा'** इति पत्रिकायाः प्रकाशनं क्रियते। एवं सततप्रकाशनकार्यसिद्धौ भगवत्याः शारदाम्बायाः कृपाविशेष एव कारणमिति मे विश्वासः। छात्राणाम् अध्यापकानाञ्च लेखाः पत्रिकायाः शोभां वर्धयन्ति । अस्य महतः कार्यस्य सिद्धौ डा. दयानिधिवर्यः एवं डा. रामजियावनवर्यः छात्राध्यापकसमूहश्च प्रयत्नम् अकार्षीदतः तेभ्यः समेभ्यः शुभमातनुतां श्रीशारदाजगद्गुरू सन्दर्भेऽस्मिन् समेषां पठितॄणां मानसमानन्दमयं कुर्यात् । शिक्षाधारा इत्याशासानः उभयेषां जगद्गुरूणां श्रीशारदाम्बायाश्च चरणारविन्दयोः प्रणतिततीः समर्पयामि।

इत्थम्

B ... (signature)

प्रो. रामचन्दुल बालाजी
(शिक्षाशास्त्रविभागाध्यक्षः)

# सम्पादकीयम्





उत्तमशिक्षणविषयाः सर्वदा प्रामाणिकाः भवन्ति । शिक्षायाः मूले एतेषां प्रभावः दृश्यते । भारतीयशिक्षाव्यवस्थायां शास्त्राध्ययनेन सह शोधकर्माण्यपि महत्त्वपूर्णानि एवं वर्तन्ते । शोधाध्ययनं शोधलेखनं दिशति । शास्त्राणाम् इयं प्राचीना परम्परा वर्तते । शास्त्रसंरक्षणार्थं पठनपाठनादिना सह शोधलेखादिप्रकाशनमपि संस्कृतशास्त्राणाम् अधिगमे नितराम् उपकारं करोति । शिक्षाशास्त्रविभागीया इयं "शिक्षाधारा" इति पत्रिका प्रतिवर्षमिव अस्मिन्वर्षेऽपि प्रकाश्यते । अत्र प्राध्यापकानां छात्राणाञ्च लेखाः शोधलेखाञ्च प्रकाशिताः वर्तन्ते । पत्रिकायाम् अस्यां लेखाः संस्कृत- हिन्दी-आङ्ग्ल-कन्नड् इति चतसृभिर्भाषाभिर्निबद्धाः सन्ति ।

अस्याः पत्रिकायाः सम्पादनकर्माणि शिक्षाशास्त्रविभागाध्यक्षाणां प्रो. रामचन्द्रुल बालाजीवर्याणां सत्प्रेरणया समारब्धानि । सङ्गणक-प्राध्यापकानां शशिधर के. वि. वर्याणां पत्रिकायाः स्वरूपनिर्धारणे महत्त्वपूर्णं योगदानं वर्तते । विभागस्य द्वितीयवर्षीयाः छात्राः सरितादासः, सन्दीपचन्द्रः, बि.वि. श्रीपतिः एवं प्रथमवर्षीयाः छात्राः सुचिस्मिता साहू एवं श्रीपति एस.पी. पत्रिकायाः सज्जीकरणे महत् साहाय्यं कृतवन्तः। तेभ्यः सर्वेभ्यः सहार्दं कार्तज्ञ्यं समर्पयावः । भगवतः श्रीरामचन्द्रस्य शिवस्य मातुः शारदाम्बायाश्च अनुग्रहेण एतत् प्रकाशनकर्म सम्पादितम्।

सम्पादकौ

डा. दयानिधिशर्मा

डा. रामजियावनः

# शिक्षाविभागः



Prof. Ramachandrula Balaji
Head of the Department



Prof. Chandrakant
Professor



Prof. Hariprasad K
Professor



Dr. Venkataramana S Bhat
Associate Professor



Dr. Dayanidhi Sharma
Assistant Professor



Dr. Narayan Vaidya
Assistant Professor



Dr. Aravind Kumar Somadutt
Assistant Professor



Dr. Priyanka Chandra
Asst. Professor (Guest)



Dr. Ramjiyavan
Asst. Professor (Guest)

# Non-Teaching Staff


Dr. Akash Babu Jain
Asst. Librarian


Sri Gururaj Bhat
Section Officer


Smt. Manjula S
U D C


Sri Gunjan Rathee
L D C


Sri S Dinesh
M T S


Sri H Kumar
M T S


Sri S Shivanna
M T S


Smt. Siddamma
M T S


Sri M Mohammad Rafiq
M T S


Sri Himamshu
M T S

# सत्रसारः

**सत्रारम्भः**

श्री शारदाम्बायाः परिपूर्णकृपाकटाक्षैः श्री श्री भारतीतीर्थमहास्वामिनाम् अनुग्रहविशेषैः अस्मत्कुलपतीनाम् आचार्याणां शुभाशीर्भिः शृङ्गेरी क्षेत्रे स्थितस्य राजीवगान्धीपरिसरस्य शिक्षाशास्त्रविभागस्य ऐषमः सत्रारम्भः 2022-23 तमे दिनाङ्के अभवत्।

**वाग्वर्धिनीपरिषद्**

छात्राणां वाग्वर्धनाय सभाभिरुतापनोदनाय च प्रतिवत्सरवत् हायनेऽस्मिन्नपि वाग्वर्धिनीपरिषदः सञ्चालनं विभागपक्षतः समजायत। परिषदः संयोजकः डा. अरविन्दसोमदत्तवर्यः आसीत्।

**साप्ताहिकी संङ्गोष्ठी**

प्रशिणाङ्गत्वेन कौशलविकासाय निश्चितविषयेषु गोष्ठ्यः सञ्चालिताः । संयोजकत्वेन डा. प्रियङ्काचन्द्रमहोदयया दायित्वमिदम् उत्तमरीत्या सम्पादितम्।

**छात्रप्रतिनिधयः**

प्रवेशप्रक्रियायाः समाप्त्यनन्तरं शिक्षाशास्त्रीकक्ष्यायाः आरम्भः सञ्जातः । तत्र प्रथमवर्षे एस्. पि. श्रीपतिः, सुचिस्मिता साहु च एवमेव द्वितीयवर्षे सन्दीपचन्द्र बिजल्वाण् सरितादाशश्च आहत्य चत्वारः छात्राः कक्षाप्रतिनिधित्वेन चिताः।

**व्यावसायिकक्षमतोन्नयनकार्यक्रमाः (EPC. Programmes)**

शिक्षाशास्त्रस्य पाठ्यक्रमानुसारम् अस्मिन्वर्षे अपि व्यावसायिकक्षमतोन्नयनकार्यक्रमाः विभागे समायोजिताः। तेषां विविधकार्यक्रमाणां विवरणं क्रमशः अधोलिखितरूपेण वर्तते-

- चलचित्रप्रदर्शनम्
- विभागे छात्राणां कृते मार्चमासस्य 13 दिनाङ्के सोमवासरे **'परिचय'** इति चलचित्रस्य प्रदर्शनं विहितम् । एतत् चलचित्रं बालमनोविज्ञाने आधारितं वर्तते। अस्य कार्यक्रमस्य संयोजकः डा. अरविन्दसोमदत्तवर्यः आसीत् ।

**व्यक्तित्वविकासशिबिरम्**

शिक्षाशास्त्रविभागे छात्राणां विकासाय अप्रैलमासस्य 6 दिनाङ्के व्यक्तित्वविकासशिबिरस्य आयोजनं कृतम्। अस्मिन् कार्यक्रमे परिसरस्य निदेशकचराः

पूर्वकुलपतयः प्रो. ए.पी. सच्चिदानन्दवर्याः व्यक्तित्वविकाससन्दर्भे आतिथ्यभाषणं कृतवन्तः। अस्य कार्यक्रमस्य संयोजकः डा. नारायणवैद्यवर्यः आसीत्।

**आदर्शसाक्षात्कारः**

शिक्षाशास्त्रविभागे द्वितीयवर्षीयाणां छात्राणां कृते आदर्शसाक्षात्कारकार्यक्रमः आयोजितः । अस्मिन्कार्यक्रमे श्री अनन्तहेब्बारवर्यः (हरिहरपुराविद्यालयस्य सेवानिवृत्तशिक्षकः) श्री मञ्जुनाथभट्टः (संस्कृतशिक्षकः बैंग्लोर्) च विषयविशेषज्ञौ आस्ताम्। अस्य कार्यक्रमस्य संयोजकः डा. वेंकटरमणभट्टवर्यः आसीत् ।

**प्रायोगिकी परीक्षा**

द्वितीयवर्षीयाणां छात्राणां प्रायोगिकी परीक्षा फरवरीमासस्य 7 दिनाङ्कात् आरभ्य 10 दिनाङ्कपर्यन्तं समायोजिता। अस्यां प्रायोगिकरपरीक्षायां बाह्यपरीक्षकरूपेण राष्ट्रियसंस्कृतविश्वविद्यालयतिरुपतितः समागताः डा. चन्द्रशेखरवर्यः आसीत्। अस्य कार्यक्रमस्य संयोजकः डा. नारायणवैद्यवर्यः आसीत्।

**अनुवादकार्यशाला**

शिक्षाशास्त्रविभागे द्वितीयवर्षीयाणां छात्राणां कृते अनुवादकार्यशालायाः आयोजनं कृतम्। कार्यशालायाः उद्घाटनकार्यक्रमे सम्भाषणसंदेशपत्रिकायाः सम्पादकाः मान्याः श्री जनार्दनहेगड़ेमहोदयाः छात्रान् बोधितवन्तः। तेषां व्याख्यानेन छात्राः अनुवादस्य गूढ़रहस्यान् ज्ञातवन्तः । समापनकार्यक्रमे संस्कृतभारत्याः मैगलूरुमण्डलस्य अखिलभारतीयप्रशिक्षणप्रमुखाः श्रीमन्तः डा. एच. आर. विश्वासमहोदयाः स्वव्याख्यानेन छात्रान् उपकृतवन्तः। अयं कार्यक्रमः अप्रैलमासस्य 28 दिनाङ्कात् आरभ्य मईमासस्य 3 दिनाङ्कपर्यन्तं समायोजितः । अस्य कार्यक्रमस्य संयोजकः प्रो. हरिप्रसाद के. वर्यः आसीत्।

# शिक्षाधारा (2022-23)

# SHIKASHADHARA

## संस्कृतधारा

# संवेदना (Sensation)

**प्रो. रामचन्द्रुल बालाजी**
**आचार्यः (शिक्षाशास्त्रविभागः)**

**संवेदना स्वरूपम्** (Nature) :-

'मनसा प्रथमतया गृह्यमानं ज्ञानं संवेदना । तच्च निर्विकल्पं निर्विशेषं वा ज्ञानमपि कथ्यते । तच्चेन्द्रियाणां बाह्यपदार्थैः सह सम्पर्काज्जायते । यदाऽस्माकं किमपि ज्ञानेन्द्रियं बाह्यपदार्थेन सम्पृक्तं भवति यद्वा यदा ज्ञानेन्द्रियार्थसन्निकर्षो भवति, तदा तत्रस्था ज्ञानवाहिन्यो नाड्यः उत्तेजिताः भवन्ति । ज्ञानेन्द्रियोत्तेजना च सुषुम्णामार्गेण मस्तिष्ककेन्द्रं प्राप्नोति। तदा विशिष्टमिन्द्रियजं ज्ञानमुत्पद्यते । एवं स्पष्टं यदुत्तेजना बोधेन्द्रियस्याग्रिमेभागे प्रतिकियां करोति । तज्जन्यं संस्कारं बोध स्नायवो मस्तिष्के स्थितं बोधकेन्द्रं प्रापयन्ति । ततो मनसि संवेदना जायते'। 'उत्तेजनाश्च द्विविधा भवन्ति बाह्यस्थाः, अन्तःस्थाश्चेति । कोऽपि बाह्यः पदार्थो बाह्योत्तेजनां जनयितुं शक्नोतीन्द्रिय सन्निकर्षमवाप्य।
अन्तःस्था उत्तेजनास्तु क्षुत्पिपासाश्रान्तिपीडादयः । ताः शरीरस्यान्तरिकेभ्यो दशाभ्यः उत्पद्यन्ते । नहि तासां किमपि ज्ञानेन्द्रियं भवति, गन्धदीनां नासादिवत् । संवेदना अज्ञातार्थः संस्कारः । ज्ञातेऽर्थे संवेदना प्रत्यक्षज्ञाने परिणमति''।१

'वार्डमहोदयस्य कथनं यद् विशुद्धा सवेदना मनोवैज्ञानिककल्पनैव। नहि प्रौढानां विशुद्धा संवेदना सम्भवति। नवजातशिशुः संवेदनानामर्थं न विज्ञानाति । स मृदङ्गशब्दं श्रृणोति, न च जानाति 'मृदङ्गशब्दोऽयम्' इति । तस्य संवेदना विशुद्धा। प्रौढास्तु ध्वनिं निशम्य सद्यएव मृदङ्गस्यान्यस्य कस्यापि वा वाद्यस्यायं ध्वनिरित्यर्थं गृह्णन्ति । अतस्तस्य सविकल्पकमेव प्रत्यक्षं सम्भवति । यदा वयं किमपि पदार्थं पश्यामस्तदा तदभिज्ञानात् पूर्वं निरर्थकं ज्ञानं चक्षुरिन्द्रियोत्तेजनेन भवति । इदं ज्ञानं 'संवेदना इति कथ्यते । यदा च स पदार्थः परिचीयते तदा सैवा संवेदना प्रत्यक्षज्ञानरूपेण सम्पद्यते । दूरादागच्छतोध्वनेः प्रथमेक्षणे ज्ञानं संवेदना। यदा च ज्ञायते इदम् प्रकारकोऽयम् ध्वनिस्तदा प्रत्यक्षं भवति । संवेदना विकल्पक्रियारहितमन्यज्ञानासम्बद्धं निष्प्रकारकं ज्ञानम् ; प्रत्यक्षं च सप्रकारकम्, सविकल्पकमन्यज्ञानसम्बद्धं ज्ञानमितिभेदः' ।२

**उत्तेजना** (Stimulus) :-

उत्तेजना संवेदनाया जननी । सा च परिवेशस्थितसरलपदार्थरूपा। उत्तेजना आदोत्पद्यते । ज्ञानेन्द्रियं प्रभावितंकरोति, तत्रक्रियां जनयति; यथा -ध्वनिः शोत्रेन्द्रिये गृहीतः भवति, शब्दस्य संवेदनां चोत्पादयति। उत्तेजना भौतिके जगति स्थितं किमपि वस्तु । उत्तेजनानां

समष्टिः 'परिस्थितिः' इति कथ्यते । परिस्थितिश्च प्रत्यक्षीकरणस्य विषयः। प्रत्यक्षीकरणेन परिस्थितेर्ज्ञानं भवति । उत्तेजनाभेदः संवेदनाभेदजनको भवति । प्रकाशरश्मीनां तरङ्गाणां (Wave-lengthes) वैविध्यं वर्णसम्वेदना वैविध्यकारणम् । एवमेव ध्वनितरङ्गा अपि रचना (Composition), दीर्घ- (Length), वैपुल्य- (Amplitude)भेदेन ध्वनिसम्वेदनाभेदजनकाः भवन्ति । नासिकायाः (Nosalmembrane) प्रभावं जनयन्तो गन्धमयपदार्थनिर्मितवायुकणाः (Gaseaus) गन्धसंवेदना जनकाः । शरीरान्तस्था: उत्तेजनाः शरीराभ्यन्तरे जायमानानि शारीरिकाणि परिवर्तनानि । आमाशयभित्तिषु जायमानः पेशीसङ्कोचः क्षुत्संवेदनाजनयिता भवति। तालोःशुष्कता पिपासा संवेदना जनयित्री । पेशीनां गतयो गतिसंवेदनां जनयन्ति। एवमेव विविधा उत्तेजना विविधाः संवेदनां जनयन्ति' ।३

**प्रतिक्रिया (Response) :-**

"व्यवहारवादिनो मनोविज्ञानं व्यवहारविज्ञानमितिमन्यन्ते। तन्मतेनोत्तेजना जन्या प्रतिक्रियैव व्यवहारः । सर्वाप्युत्तेजना शरीरे प्रतिक्रियां जनयति। उत्तेजना परिवेशादागच्छति, प्रतिक्रिया चपरिवेशं प्रति गच्छति । अयमेव क्रिया-प्रतिक्रियानियमः, घात-प्रतिघातनियमो वा कथ्यते । परिवेशादागच्छन्त्यः उत्तेजनाः प्रतिक्रियारूपेण जनं गतये प्रेरयन्ति । गत्या च परिवेशे परिवर्तनं जायते । ज्ञानेन्द्रियोत्तेजनयाः प्रतिक्रिया पैशिकगतिषु ग्रन्थिस्रोतं (glandular reaction) च परिणमति । पेश्यो ग्रन्थयश्च कार्यकारीण्यङ्गानि भवन्ति । पेशीनां द्वौ भेदौ स्तः- राजीवाः, अरेखाश्चा राजीवाः पेश्येच्छायाः शासने वर्तन्ते । ता बाहू, पादौ, पिण्डम्, जिह्वाम्, स्वरयन्त्रं च चालयन्ति । अरेखाः पेश्यो नेच्छाधीनाः । तासां शासनं रक्तवाहिनीषु, आन्त्रेषु, पायूपस्थयोश्च भवति। अतो वाह्वन् महोदयेन 'प्रतिक्रियाह्युत्तेजनाजन्यं राजीवरेखापेशीनां ग्रन्थीनाञ्च परिवर्तनम्' इति प्रतिक्रिया लक्षणं स्वीकृतम् ''। ४

**संवेदनस्वरूप संक्षेपेण :-**

"आद्यमिन्द्रियजं ज्ञानं नामजात्यादि वर्जितम् ।
वस्तुमात्रावगाहित्वान्निर्विकल्पकमुच्यते ॥
क्षणान्तरे च संस्कारै- नामजात्यादियोजनात् ।
तन्निर्विकल्पकज्ञानं सविकल्पकं प्रजायते ॥
ज्ञान काले तु प्रत्यक्षं निर्विकल्पकमेव हि ।
व्यवहारे च नामादियोजनात् सविकल्पकम् ॥
मनोविज्ञानशास्त्रे तत्संवेदनमुदीर्यते।

पूर्वोत्तरैरसम्बध्द संस्कारैः तन्निरर्थकम् ॥
पूर्वोत्तरैश्च संस्कारैः सम्बध्दं जायते यदा ।
तदाप्रत्यक्षवाच्यं तत् सार्थकं चापि निगद्यते ॥
एकमेवेन्द्रियं क्वापि क्वापि चैवेन्द्रियद्वयम् ।
किन्तु सम्वेदनंसर्वं निम्नवर्गस्य प्राणिषु" ।५ ।।

संवेदनोपयोगाः :-

"सर्वेषामेव ज्ञानानां मूलं सम्वेदनं मतम् ।
यत्र तन्नास्ति तज्ज्ञानं सम्पूर्णं नैव जायते ।।
सम्वेदनक्षमत्वं च भिन्न भिन्नेषु प्राणिषु ।
वंशानुक्रमसम्बध्दादभ्यासाद्वापि जायते" ॥ ६

**संवेदनधर्माः (attributes)**

"संवेदनानां केचित् प्रमुखा गुणाः प्रकारभेदेन, शक्तिभेदेन चोल्लिख्यन्ते । तत्र प्रथमः प्रकार:- 'संवेदनासु जातिमूला भिन्नता (generic differences) दृश्यते । शब्दसंवेदना रूपसंवेदनया भिन्ना भवति । एवमेव घ्राणसंवेदना रससंवेदनया भिन्ना । एवं विधोभेदः प्रकारभेदोऽभिधीयते । भिन्नानां संवेदनानामप्यवान्तरभेदा भवन्ति । यथा रूपसंवेदनायाः श्वेतनीलपीतरक्तादिवर्णभेदेन भेदाः । अस्य च कारणम् सर्वासामपि संवेदनानां पृथगुत्तेजना भवन्ति, पृथक् चेन्द्रियाणि । तत्र वर्णसंवेदना आक्षिगोलकस्य (eye-ball), दृष्टिपटलस्य (Ratina), व्योमतरङ्गाणां (Ether waves) क्रिययोत्पद्यते"।७

"तीव्रता च द्वितीयो धर्मः। संवेदनानां द्वितीयो गुणस्तीव्रता भेदजन्यः । ध्वनेस्सवेदना ध्वनेः तीव्रमध्यममन्दादिभेदेन भिन्ना भवन्ति । मन्दं ताडितेन वाद्ययन्त्रेण यो ध्वनिः प्रसूयते न स तीव्रं ताडितेन । एवमेव प्रकाशोऽपि मन्दस्तीव्रश्च भवन्ति । गन्धोपि तीव्रोमन्दश्च । तीव्रेण प्रकाशेन प्रकाशस्य तीव्रा संवेदनोत्पद्यते । मन्देन च मन्दा । उत्तेजनायास्तीव्रत्वमन्दत्वपरिमाणानुसारेणैव संवेदनाऽपि तीव्रा मन्दा वा भवति" ।८

'तृतीयश्च धर्मः कालः । सर्वस्या अपि संवेदनाया विशिष्टः संवेद्यः कालो भवति । कश्चिदेवकालं संवेदना मनस्यवतिष्ठते । स्थितिकालभेदेन संवेदना भेदो भवति।दशकालायावन्मनसि तिष्ठन्ती संवेदना विंशतिः कालायावत्तिष्ठन्त्याः संवेदनाया भिन्ना भवति । व्याप्तिः संवेदनायाश्चतुर्थो धर्मः :- दृष्टिस्पर्शसंवेदने व्याप्तिमत्याविति सर्व एव स्वीकुर्वन्ति । वृक्षं दृष्ट्वा लतां पश्यन् जनो द्वे भिन्ने संवेदने अनुभवति। ययोः प्रथमा द्वितीयस्य अधिकव्याप्तिमती ।

एवमेव कराग्रेण वस्तुनः स्पर्शे या संवेदना भवति सा समग्रेणकरेण स्पर्शाद् जायमानाया संवेदनाया भिन्ना । द्वितीयाया व्याप्तिः प्रथमाया अधिका । स्थानीयचिह्नं (Loocal sign or Loocal colour) संवेदनाया: पञ्चमो धर्मः । यदि कश्चिदेकमेव वर्तिकाग्रं समानबलेन कपोले, नासिकायाम्, कपाले च निदध्यात्, तदा तत्स्पर्शसंवेदना गुणदृष्ट्या, तीव्रतादृष्ट्या च सदृश्यो भवन्त्योऽपि स्थानीयवैशिष्ट्ययुक्ता भविष्यन्ति । त्वचो दृष्टिपटलस्य वा भागाविशेषगता संवेदनाऽन्यभागगताया भिद्यते । अयं विशेषः "स्थानीयचिह्नम्" इति कथ्यते ।"९

**"उत्तेजनायाः सीमा :-**

या उत्तेजना अस्माकं ज्ञानेन्द्रियेष्वाघातं कुर्वन्ति तासां तीव्रता न समाना भवति । काचिदुत्तेजना तीव्रा भवति, काचिच्च मन्दा । तीव्राया उत्तेजनायाः संवेदनापि तीव्रा भवति, मन्दायाश्च मन्दा। यथा यथा प्रातःकाले प्रकाशोऽभिवर्धते, सायङ्काले अन्धकारो वा; तथा तथा प्रकाशान्धकारयोः संवेदनाऽपि तीव्रतरा जायते । परं यदि प्रकाशोऽतिमन्दोन्धकारश्चवातिमन्दो भवति, तदा नहि कापि संवेदनोत्पद्यते । अतिमन्देप्रकाशे संवेदनाजननसमर्थ्यं न भवति । एवमेव स्वादस्पर्शादि- विषयकोत्तेजना विषये ज्ञातव्यम् । नहि स्पर्शतिमन्दतायां संवेदना भवति । एवमेवोत्तेजनाया अतितीव्रतायां संवेदना न जायते । अतितीव्रोत्तेजना पीडाकरी भवति। अति तीव्रःप्रकाशः गन्धः, स्वादः स्पर्शोवा पीडामेव जनयति, नतु संवेदनाम्। उत्तेजनातीव्रतायाः परिमाणं यत्रोत्तेजना संवेदना जननसामर्थ्यवती भवति 'संवेदनाद्वारम्' (Linen or threshold of Sensibility) कथ्यते । यतोऽनन्तरं सा संवेदना जननेऽसमर्था भवति, पीडामेवजनयति; तत्परिमाणं 'संवेदनाया ऊर्ध्वसीमा' (Height of sensibility) इति कथ्यते । निम्नोर्ध्वयोर्मध्यगतोविस्तारः 'संवेद्यता विस्तारः' (Range of sensibility) अभिधीयते ।"१०

**बेवर-फेचनर नियमः :-**

"सर्वेष्वपि संवेदनेषु बाह्योत्तेजनापेक्षिता भवति। उत्तेजनसंवेदनयोः तीव्रत्वे मन्दत्वे च कः सम्बन्धो भवतीत्यत्र बेवरमहोदयेन नियमो निर्धारितोऽस्ति। निम्नसीम्न-ऊर्ध्वसीम्नश्चमध्ये यथा यथोत्तेजनायास्तीव्रता वर्धते, तथा तथा संवेदनाप्युत्तरोत्तरं तीव्रा भवति । विपरीते च स्थितिर्विपरीता जायते । परं वृध्देरपि काचित् सीमा भवति, यत उत्तरं तीव्रतराऽप्युत्तेजना न तीव्रतरां संवेदनां कर्तुं समर्था भवति । उत्तेजनायां वृध्दिःकदाचिदल्पा भवति, येन तज्जन्या संवेदनावृध्दिर्ध्यानं नाकर्षति । न सा संवेद्यान्तरं (Appreciable difference) जनयति । संवेद्यान्तरस्य जननायोत्तेजनावृध्दे: काचिन्मात्रा निश्चेतव्या । ययाल्पतमया वृध्दिमात्रया संवेदनाया वृध्दिमात्रा संवेद्या भवति, सामात्रा

ज्ञेयान्तरस्य न्यूनतमा (Difference threshold) मात्रा कथ्यते । येनोत्तेजनाया मात्रा वर्धते, तेन मूलोत्तेजनाया एव विशिष्टेनांशेन भाव्यम् । उदाहरणार्थं भारसंवेदनाया वृध्दये उत्तेजनाया विंशतितमो भागोऽधिकोऽपेक्ष्यते । विंशतिसेटकानां भारं शिरसि वहन्नेकस्य सेटकस्य वृध्दावेव भारसंवेदनाया अन्तरं संवेत्ति, न तु ततो न्यूनस्य भारस्य वृध्दौ ।

हस्ते सुर्वणस्य शतं तोलान् धारयन् जनः पञ्चतोलेभ्यो न्यूने सुर्वणेऽधिके निहिते नहि भारेऽन्तरमनुभवति। एवमेव ध्वनिसंवेदनवृध्दिसंवेदनायै मूलध्वनेस्तृतीयांश आवश्यको भवति । उज्ज्वलता वृध्दिसंवेदनायै च शततमो अंशः। उत्तेजनायामतो न्यूनांशस्य वृध्या नहि संवेदनायामन्तरमुत्पद्यते।

एवं यथा कस्मिंश्चित् स्थाने दीपकद्वयं प्रज्वलति । यत्र यद्येकस्य वृद्धिह्रासो वा जायते तदा तस्य भेदस्यानुभवः सपद्येव जायते। किन्तु यस्मिन् स्थानेशतं दीपकाः, तत्रैकस्य दीपस्य वृद्धौ ह्रासे वा भेदो नानुभूयते। अत एव उत्तेजनानुपातेनैव वृध्दिर्ह्रासो वा यदा भवति तदैव तत्र बेवर नियमः इति ख्यातः"।

"फेचनरमहोदयस्यापि नियमोऽस्मिन् विषयेऽतिप्रसिध्दः । स चेत्थम्- "संवेदनायास्तीव्रतायां समानान्तरवृध्दये (Arithmetical progression) उत्तेजनायां गुणोत्तरया (Geometrical progression) वृध्या भाव्यम्", संवेदनोत्तेजनायाश्छेदाया (Logarithm) अनुपातेन वर्धते" इति च। अस्य सिध्दान्तस्य परीक्षा नेकैर्विद्वद्भिः कृता, परं न पूर्णतया सन्तोषप्रदःपरिणामो निरीक्षितः । 'अयं नियमो अंशत एव सत्यः' इति प्रायेण मनोविदो मन्यन्ते" ।१२

**संवेदनानां भेदाः :-**

"संवेदनानां प्रकारकृतः परिमाणकृतश्चेति द्विविधो भेदः प्रतीयते । रूपसंवेदनं रससंवेदनात् भिद्यते। रससंवेदनं च शब्दसंवेदात् भिन्नं भवति । अयं संवेदनानां प्रकारकृतो भेदः । एवं नीलपीतादि वर्णानां भेदोऽपि दृष्टिसंवेदस्य प्रकारकृतो भेदः । अयं प्रकारकृतो भेदः इन्द्रियभेदाधीनो भवति । रूपसंवेदनस्य रससंवेदनात् यो भेदः, स तज्जनकस्येन्द्रियस्य भेदादेव जायते ।

संवेदनस्य प्राबल्यमप्राबल्यं वा परिमाणभेदाद्गृह्यते । मन्दः शब्दः तीव्रशब्दात्, मन्दश्च गन्धः तीव्रगन्धाद्भिद्यते। अयमेव परिमाणभेदः न प्रकारभेदः । अयं च परिमाणभेदोत्तेजनायाः सामर्थ्याश्रितो भवति । तीव्रा उत्तेजना तीव्रसंवेदनं जनयति। मन्दा च मन्दं संवेदनमुत्पादयति । कदाचिदयं परिमाणभेदः प्रकारभेदरूपेणापि परिणमते । यदा काचिदुत्तेजना नियतां मर्यादामतिक्रामति, तदा तज्जन्यं संवेदनं परिमाणतो भिन्नमपि प्रकारान्तरत्वमुपयाति ।

यथोष्णस्यायः पिण्डस्य वर्णोऽरुणो दृश्यते । किन्तु तापातिरिक्ते तस्य वर्णः शुक्लः सञ्जायते । एवं (1) प्रकारभेदात् (2) परिमाणभेदात्, शक्तिभेदाद्वा संवेदना द्विधा विभक्ता भवति । किन्तु तद्व्यतिरिक्तदेशकाल भेदादपि संवेदनं भिद्यते । याह्युत्तेजना शरीरेऽधिकदेश व्यापिनं संवेदनं जनयति । साल्पदेशव्यापक संवेदनात् भिन्नमेव संवेदनं जनयति । यथोष्णसूचिका सम्बन्धाच्छरीरे यदुष्णात्मकं स्पर्शसंवेदनं जायते । ततः उष्णसमिथ: संपर्काज्जायमानसंवेदनं भिन्नमेव भवति ।

अत एवात्र संवेदनयो देशकृतो व्यापकता कृतो वा भेदः । एवं क्षणमात्रस्थायिनः शब्द संवेदनात् दीर्घकालस्थायिनः शब्दसंवेदनस्य भिन्नत्वमनुभवसिध्दं भवति । देशकालकृतौ भेदाविमौ पूर्वोक्ताभ्यां भेदाभ्यां भिन्नावेव। तौ स्वगतौ गुणकृतौ च संवेदनभेदौ । इमौ च देशकालकृतीभेदौ । तदेवं स्वगत भेदाद् गुणकृतभेदाद्वा भिन्नावेव देशकाल कृतौ भेदौ" ।।१३

तथाचोक्तम् :-

"प्रकारात् परिमाणाच्च भेदः संवेदनेद्विधा ।
इन्द्रियभेदजः पूर्वो ज्ञेयभेदात् तथाऽपरः ॥
रूपसंवेदनं भिन्नं रससंवेदनाद् यथा ।
यथावामन्दशब्दाच्च तीव्रः शब्दो विभिद्यते ॥
देशकालविभेदास्तु परं भेदद्वयं मतम् ।
एवं संवेदनस्यात्र भेदः प्रायः चतुर्विधः ॥"१४

"एवमपि संवेदनानां त्रयो मुख्याः भेदाः वर्तन्ते ।

1. आङ्गिकसंवेदनाः (organic sensations)
2. गतिसंवेदनाः (Motor or Kinesthetic sensations)
3. विशिष्टसंवेदनाश्च (Special sensations ) "१५

"क्षुत्पिपासादिकाः आङ्गिकसंवेदनाः । गमनस्पन्दनादयो गतिसंवेदनाः। दृष्टिश्रवणादिकाश्च विशिष्ट संवेदना भवन्ति । आङ्गिकसंवेदनाः शरीरस्यान्तरङ्गदशाभ्य उत्पद्यन्ते । क्षुत्पिपासयोरुत्पत्ति स्थानं कारणञ्च पूर्वं निरूपितम् । श्रान्तिविश्रान्त्यादीनां जीवनवेदनानाम् (vital feelings) उत्पत्तिः समग्रस्य शरीरस्य सामान्यस्थितेर्भवति, नत्वङ्गविशेषदशायाः । अन्यासां शिरःपीडादीनां संवेदनानां स्थानं निश्चितं भवति । एताः शरीरस्वास्थ्यास्वास्थ्यसूचिकाः सन्ति । एतासां जन्म बाह्योत्तेजनाभ्यो न भवतीति स्पष्टम् । न चासां किमपि विशिष्टं ज्ञानेन्द्रियम्" ।१६

**संवेदन वर्गीकरणम् :-**

“आद्यमिन्द्रियजं ज्ञानं संवेदनपदवाच्यं भवतीति पूर्वमुक्तम् । तानि च संवेदनजनकानि ज्ञानेन्द्रियाणि पञ्चभवन्तीति संवेदनमपि मुख्यतः पञ्चविधम् । भारतीयदर्शने विषय सम्बन्धात् संवेदनानां विभाग: कृतोऽस्ति । मनोविज्ञानेऽपि चात्र इन्द्रियसंबन्धाश्रितोऽयं संवेदनविभागो दृश्यते। चक्षुः श्रोत्रत्वक्घ्राणरसनं चेति पञ्चज्ञानेन्द्रियाण्युच्यन्ते । तदनुसारं मनोवैज्ञानिकैः (1) दृष्टिसंवेदनम् ( 2 ) श्रोत्रसंवेदनम् (3) घ्राणसंवेदनम् (4) रससंवेदनम् (5) स्पर्शसंवेदनञ्चेतिपञ्चविधः इन्द्रियप्रधानः संवेदनविभागः कृतोऽस्ति ।

भारतीयदर्शने रूपरसगन्धस्पर्शशब्दाः पञ्चज्ञानेन्द्रियाणां विषयाः समाम्नाताः । तदनुसारं च (1) रूपसंवेदनम् (2) रससंवेदनम् (3) गन्धसंवेदनम् (4) शब्दसंवेदनम् (5) स्पर्शसंवेदनञ्चेति विषयप्रधानोविभागो कृतोऽस्ति । अयं नामभेद एव न वस्तुभेदः । अत्र उभयोर्मतेऽपि विभाग: समान एव । भारतीयदर्शने पञ्चविधएवायं संवेदनविभागोऽस्ति । किन्तु मनोवैज्ञानिकैः स्पर्शसंवेदनस्यापि निम्नाङ्कितश्चतुर्विधोऽवान्तरविभागः कृतोऽस्ति । (1) पीडासंवेदनम् (2) मर्दनसंवेदनम् (3) उष्णसंवेदनम् (4) शीतसंवेदनम् । एवं मुख्याः पञ्चसंवेदनविभागाः । ततो भिन्ना अन्येऽपि त्रयोभेदाः मनोवैज्ञानिकैः कृतो सन्ति। ते ( 6 ) गतिसंवेदनम् ( 7 ) समत्वसंवेदनम् (8) देहान्तर्वर्तिक्रियासंवेदनम्"।१७

**तदयमत्र संग्रह: : -**

“ज्ञानेन्द्रियाणि पञ्चैव, तथा संवेदनान्यापि ।
दृष्टिश्रोत्ररसघ्राणस्पर्शसंवेदनं तथा ॥
शीतोष्णस्पर्शभेदाच्च पीडनामर्दनात्तथा ।
स्पर्शसंवेदनं चापि चतुर्था भिद्यते पुनः ॥
शरीरान्तः क्रियाणां च समत्वस्य गतेस्तथा ।
संवेदनत्रयं चैतत् योजयित्वाष्टधा मतम्” ॥१८

१. Manual of Psychology पृ. 140, Jadunath Sinha, Sinha Publishing House PVT. LTD, Calicut - 1970

२. अभिनवमनोविज्ञानम्. पृ. 46, अग्निहोत्री, वाराणासिः १९६५

३. Manual of Psychology पृ. 141-2, Jadunath Sinha, Sinha Publishing House PVT. LTD, Calicut - 1970

४. अभिनवमनोविज्ञानम्. पृ. 46-47, अग्निहोत्री, वाराणासिः १९६५
५. मनोविज्ञानमीमांसा - पृ 173, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली - १९५९
६. मनोविज्ञानमीमांसा - पृ 174, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली - १९५९
७. आधुनिकसामान्यमनोविज्ञानम् - पृ 104, रामबलेश्वरसिंह, दिल्ली - १९६१
८. आधुनिकसामान्यमनोविज्ञानम् - पृ 104-5, रामबलेश्वरसिंह, दिल्ली - १९६१
९. Manual of Psychology पृ. 145-146, Jadunath Sinha, Sinha Publishing House PVT. LTD, Calicut - 1970
१०. अभिनवमनोविज्ञानम् पृ. 47-49, अग्निहोत्री, वाराणासिः १९६५
११. मनोविज्ञानमीमांसा - पृ. 187, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली - १९५९
१२. अभिनवमनोविज्ञानम् पृ. 49, अग्निहोत्री, वाराणासिः १९६५
१३. मनोविज्ञानमीमांसा - पृ. 174, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली - १९५९
१४. म.वि.मी - पृ. 175, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली - १९५९
१५. अभिनवमनोविज्ञानम् पृ. 49, अग्निहोत्री, वाराणासिः १९६५
१६. म.वि.मी - पृ. 49-50, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली - १९५९
१७. म.वि.मी - पृ. 176, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली - १९५९
१८. म.वि.मी - पृ. 176, आचार्य विश्वेश्वरः, आत्माराव् सन्स्, दिल्ली – १९५९

# पाठ्यचर्याविकासस्य विविधोपागमाः

**प्रो.हरिप्रसादः के.**
**आचार्यः (शिक्षाशास्त्रविभागः)**

विद्यालये पाठ्यचर्यायाः विकासः साधयितुं शक्यते इति सर्वैः ज्ञायत एव । विद्यालये एषः विकासः कथं साधनीयः ? तदर्थं कः मार्गः अस्ति ? इति चिन्त्यमाने विविधाः ये उपागमाः सन्ति तेषां अवलोकनेन पाठ्यचर्यायाः विकासं विद्यालये कथं साधयितुं शक्नुमः इति ज्ञायते । ते च उपागमाः इत्थं सन्ति – विषयकेन्द्रितः उपागमः, पर्यावरणाधारितः उपागमः, व्यावहारिकः उपागमः, क्षमताधारितः उपागमश्चेति । क्रमशः एतान् विद्यालयस्तरे पाठ्यचर्यां विकासयितुं विद्यमानान् उपागमान् अत्र विस्तरशः विचारयाम ।

### ७.१.१ **विषयकेन्द्रितः उपागमः**

पाठ्यक्रमे बहवो हि विषयाः अध्यायरूपेण/पाठरूपेण घटकरूपेण (Unit) वा भवन्ति । तान् विषयान् कक्ष्यायां केवलं बोधयामः चेत् पर्याप्तं न भवति । तेषां विषयाणां बोधः व्यवहारे कार्यरूपं प्राप्नुयात् । तदभावे उत्पन्नः बोधः प्रयोजनाय न भवति, प्रत्युत भाराय एव भवति । अत एव उच्यते "**ज्ञानं भारः क्रियां विना**"[i] इति । अतः यथा पाठ्यक्रमः भवति तथा पाठ्यचर्यायाः क्रियाकलापानां संयोजनं कर्तव्यम् । यच्च विषयकेन्द्रितः उपागमः इत्युच्यते। यथा – इतिहासे विजयनगरसाम्राज्यस्य पतनम् इति विषयः पाठ्यक्रमे अस्ति चेत् अवश्यं हम्पि(अत्र विजयनगरसम्राज्यस्य अवनतेः कारणीभूतस्य कापट्यस्य तत्परिणामस्य अमानवीयस्य क्रौर्यस्य च साक्षिभूतानि चिह्नानि भूरिशः साक्षात्कर्तुं शक्यन्ते) इत्यस्य ऐतिहासिकस्थलस्य अवलोकनार्थं छात्राणां शैक्षिकयात्रा कल्पनीया।

यथा वा भाषाशिक्षायाः पाठ्यक्रमे परोपकारः इति विषयः अस्ति चेत् वीरस्वर्गं प्राप्तवतां सैनिकानां परिवाराय निधिसङ्ग्रहः कर्तव्यः, वृद्धाश्रमं प्रति गत्वा एकस्मिन् दिने तेषां तैलाभ्यञ्जनं कृत्वा तेषाम् आशीर्वादं स्वीकृत्य प्रत्यागमनं कर्तव्यम् । एतादृशाः क्रियाकलापाः छात्राणां कृते तत्तद्विषये बोधेन सह विशिष्टाम् अनुभूतिमपि प्रयच्छन्ति ।

### ७.१.२ **पर्यावरणाधारितः उपागमः**

एकस्य विद्यालयस्य पर्यावरणं अपरस्य विद्यालयस्य पर्यावरणमिव न भवति । इत्युक्ते प्रत्येकस्मिन् विद्यालये तदीयपर्यावरणं भिन्नं भिन्नं भवति । तत्तद्विद्यालये यादृशं पर्यावरणं अस्ति पाठ्यचर्यायाः विकासार्थं तादृशः क्रियाकलापः आयोजनीयः । नद्याः तीरे विद्यालयः अस्ति चेत् बालकेषु साहसिकप्रवृत्तेः वर्धनार्थं तरणादिप्रशिक्षणं दातव्यम् । पर्वतीयप्रदेशे विद्यालयः अस्ति चेत्

पर्वतारोहणप्रशिक्षणं दातव्यम् । किञ्च पर्यावरणे यादृशं सौविध्यं प्राप्यते तादृशं सौविध्यम् उपयुज्य पाठ्यक्रमे छात्रस्य अनुभूतिं शिक्षकः कारयितुं प्रवर्तेत ।

७.१.३ **व्यावहारिकः उपागमः**[ii]

वातावरणीयकारकैः(प्रेरकैः) प्रेरितेन मानवव्यवहारेण व्यवहारवादः सम्बद्धो वर्तते । व्यवहारवादे प्रेरकप्रतिक्रियासम्बद्धव्यवहारपरिवर्तनं वर्ण्यते । शिक्षाक्षेत्रे अपि छात्रस्य विकासो नाम समुचितं व्यवहारपरिवर्तनम् इति व्यवहारवादिभिरुच्यते । अतः विद्यालयस्तरे पाठ्यचर्याविकासस्य व्यावहारिकोपागम इत्युक्ते प्रत्येकं छात्रस्य विकासाय छात्रः प्रेरितः सन् पाठ्यक्रमाधारितक्रियाकलापेषु यथा भागं गृह्णीयात् तथाकरणम् इत्युच्यते । अन्यैः शब्दैः एवं वक्तुं शक्नुमः यत् यथा व्यवहारवादिमनोविज्ञानिनः व्यवहारपरिवर्तनोपायान् प्रतिपादितवन्तः तथा शिक्षायां तेषाम् अनुसरणम् इति । तदर्थं छात्रान् विकासयितुं प्रेरकाणि तत्वानि भूरिशः उपयोक्तव्यानि ।

**क्षमताधारितः उपागमः**[iii]

विद्यालये शिक्षकाः सर्वेऽपि समानक्षमतावन्तः न भवन्ति । केषुचित् अधिका क्षमता भवति । केषुचित् न्यूना क्षमता भवति । यस्य यादृशी क्षमता भवति तस्य तदनुगुणं कार्यं भवति चेत् छात्राणां लाभः अधिकः भवति । कक्ष्याशिक्षणार्थं यावती शैक्षिकयोग्यता अपेक्षिता भवति तावदेव योग्यतावन्तः शिक्षकपदेषु नियुज्यन्ते । किन्तु पाठ्यक्रमं समापयितुम् अधिकक्षमता नावश्यकी । पाठ्यक्रमस्य अनुभूतिं कारयितुं शिक्षके अतिरिक्ता क्षमता अपेक्षिता भवति ।

पाठ्यक्रमस्य अनुभूतिं कारयितुं विभिन्नाः समुचिताः क्रियाकलापाः आयोजनीयाः भवन्ति । कः क्रियाकलापः छात्रस्य प्रभावपूर्णाम् अनुभूतिं कारयितुं शक्नोति इति निश्चयं तु सामान्यः शिक्षकः कर्तुं न प्रभवति । प्रतिभावान् क्रियाशीलः छात्रवत्सलः ऋजुः शिक्षकः तत् कर्तुं प्रभवति । इत्युक्ते यस्मिन् शिक्षके पूर्वोक्ताः गुणाः भवन्ति सः कार्यमिदं (छात्रानुभूतिसम्पादनयोग्यक्रियाकलापम्) संयोजयितुं/कर्तुं पारयति । इत्थं समर्थाः शिक्षकाः पाठ्यचर्यां विद्यालयस्तरे विकास्य छात्रहितं साधयन्ति । अतः पाठ्यचर्यायाः विद्यालयस्तरे विकासं सम्पादयितुम् अयं क्षमताधारितः उपागमः उपयुक्तो भवतीति वक्तुं शक्नुमः ।

अस्य उपागमस्य अन्यः कश्चन पक्षः अपि अस्ति । अस्मिन् पक्षे शिक्षकस्य क्षमताम् आश्रित्य उपागमः न प्रवर्तते । अत्र छात्रस्य क्षमतानुगुणं विद्यालये पाठ्यचर्यायाः विकासः साधनीयः इति तात्पर्यं अस्ति ।

छात्रस्य सर्वस्यापि क्षमता समाना न भवति । अतः कक्ष्याशिक्षणे प्रायः अध्यापकस्य अध्यापनं पूर्णतः सफलं न भवति । अतः पाठ्यक्रमाधारेण छात्रस्य क्षमतानुगुणं विभिन्नान् क्रियाकलापान् शिक्षकः आयोजयितुं शक्नोति चेत् सर्वोऽपि छात्रः पाठ्यक्रमस्य अनुभूतिं सम्पादयितुं शक्नोति येन पाठ्यचर्यायाः विद्यालयस्तरे विकासः साधितश्च भवति ।

**पाठ्यचर्यानिर्माणप्रक्रिया**

इदम् अत्र मन्तव्यं यत् विद्यालयस्तरे पाठ्यचर्यानिर्माणप्रक्रिया कथमिति अत्र विचार्यते न तु राज्यस्तरे, राष्ट्रस्तरे वा ।

शिक्षानियन्त्रकसंस्थासु सामान्यतः पाठ्यचर्या-निर्माणप्रक्रियायाः पञ्च सोपानानि भवन्ति ।

1. परिस्थितीनां विश्लेषणम् [iv]
2. उद्देश्यानाम् अभिज्ञानम् चयनञ्च [v]
3. पाठ्यवस्तुनः चयनं व्यवस्थीकरणञ्च [vi]
4. शिक्षणविधीनां चयनं व्यवस्थीकरञ्च [vii]
5. परीक्षणमूल्याङ्कनयोः विधीनां निर्धारणम् [viii]

विद्यालये द्विधा पाठ्यचर्यायाः निर्माणकार्यान्वयनयोः विषये **विद्यालयस्तरे** चिन्त्यते ।

१. सिद्धायाः पाठ्यचर्यायाः क्रियान्वयनम्

२. नूतनपाठ्यचर्यायाः निर्माणम् / विकासः चेति ।

१.**सिद्धायाः पाठ्यचर्यायाः क्रियान्वयनम्**

अत्र राज्यस्य शिक्षामन्त्रालयेन अथवा कयाचित् केन्द्रीयसंस्थया या सामान्यपाठ्यचर्या सज्जीकृता वर्तते तस्याः विद्यालयपरिस्थित्यनुगुणं क्रियान्वयनार्थं मानव-संसाधनयोः सङ्घटनम् उत्तरदायित्वप्रदानञ्च भवति । अत्र पाठ्यचर्या यथावत् अनुष्ठातुं शक्यते । मानवसंसाधनयोरभावे विद्यालयीयशिक्षकाणां सामर्थ्यानुरोधेन अनुष्ठातुं शक्यते । सामर्थ्यम् अधिकम् अस्ति चेत् इत्युक्ते मानव-संसाधनयोः आधिक्यम् अस्ति चेत् अतिरिक्तक्रियाकलापमाध्यमेन पाठ्यक्रमस्य अनुभूतिसम्पादनाय छात्राणाम् अवसरः कल्पयितुं शक्यः । नो चेत् विद्यमानसामर्थ्यानुगुणमेव प्रभावपूर्णपरिणां सम्पादयितुं प्रयासः कर्तुं शक्यते ।

२.**नूतनपाठ्यचर्यायाः निर्माणम् ।**

नूतनपाठ्यचर्यायाः निर्माणं विद्यालये प्रधानशिक्षकसहितैः सर्वैः शिक्षकैः प्रबन्धनसमित्या च मिलित्वा क्रियते । विद्यालये भौतिकं सौविध्यं यथा भवति तथा नूतनपाठ्यचर्यायाः निर्माणं कर्तुं शक्यते । विद्यालये मानवीयसामर्थ्यं यादृशं भवति तदनुसारं पाठ्यचर्या निर्मातुं शक्यते । विद्यालये

संसाधनसौविध्यं यादृशं भवति तदनुसारं च पाठ्यचर्या निर्मातुं शक्यते । विद्यालयीयसंस्कृतेरनुगुणं पाठ्यचर्या निर्मिता भवति । विद्यालयेन आदृतसिद्धान्तानुसारं पाठ्यचर्यायाः निर्माणं भवति । विद्यालयस्य(छात्राणाम्) पोषकाणाम् अपेक्षानुसारं पाठ्यचर्या निर्मिता भवितुम् अर्हति ।

**उपसंहारः**

इत्थं विद्यालयस्तरे पाठ्यचर्यायाः विकासविषये अत्र चर्चा कृता । तदर्थं विशेषतः चतुरः उपागमान् स्वीकृत्य तद्बलेन कथं विकासः साधयितुं शक्यः इति चिन्तितम् । पश्चात् विद्यालयस्तरे पाठ्यचर्यानिर्माणप्रक्रिया कीदृशी भवति इत्यपि विचारः कृतः । आहत्य विद्यालयस्तरे यत्र पाठ्यचर्यायाः अनुष्ठानं भवति तत्रैव विकासोऽपि भवितुमर्हतीति अत्र प्रदर्शितम् ।

# उत्तमपर्यावरणनिर्माणार्थम् ईधनसंरक्षणम्

(Save Fuel for Better Environment)

**डा. रामजियावनः**

Assistant Professor Guest)

**उपोद्घातः**

**'स्वास्थ्यमूलम् पर्यावरणम्', 'सुखधर्माचरणम्'** । अर्थात् सूक्तिः इयम् अत्याकर्षकं दृश्यते। यतः यथा अस्माकं परितः यथा पर्यावरणं भवति तथा एव अस्माकं स्वास्थ्यं भवति। सुखमूलं स्वधर्माणाम् अनुसरणं भवति। अतः यदि सर्वे जनाः स्व-स्व धर्माणाम् आचरणं आत्मना कुर्वन्ति तदा सर्वत्र सुखम् एव अनुभूयते। यदि प्रकृतिप्रदत्तानाम् अमूल्योपहाराणां वयं सर्वे सदुपयोगं कुर्मः तदा अस्माकं सर्वाणि उद्देश्यानि परिपूर्णानि भवन्ति । विपरेतत् अनिष्टानि एव भवन्ति। अस्माकं प्रकृतिः अनेकानां संसाधनानां स्रोतांसि विद्यते, यत्र अनेकानि पदार्थानि, ईधनानि च उपलभ्यन्ते । तेभ्यः पदार्थेभ्यः ईधनं तु अतिमहत्त्वपूर्णपदार्थं विद्यते। यस्य संरक्षणं संपोषणञ्च अति आवश्यकं भवति। अतः जगति **'ईधनम्'** शक्तेः स्वरूपं भवति। यत् प्राणवायुना (Oxygen) सह संयोगं कृत्वा अत्यन्तम् उष्मां उत्पाद्यते। 'ईधनम्' संस्कृतभाषायाः **'इन्ध्'** धातोः निष्पन्नं भवति। यस्यार्थः भवति **'ज्वलनम्'**। यथा सघनेधनेषु काष्ठाः, कोयला, लिग्नाईटः, पीटः इत्यादयः प्रमुखानि ईधनानि भवन्ति। सामान्यतया द्रवेधने पेट्रोलियमपदार्थानि गैसानि च भवन्ति। वैदिकसाहित्येषु **'ईधनम्'** इति स्थाने **'अग्निः' 'वैश्वानरः'** इति रूपेण उल्लिख्यते। यथा-

**वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः।**
**इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण।।**[1]

**ऋग्वेद** 1/98/1

**प्रामुख्येन ईधनं चतुर्धा विभज्यते –**

(क) **रासायनिकईधनानि** -रासायनिकपदार्थाः, हाड्रोजनम्, मिथेनम्, सी.यन.जी., यल.पी.जी. इत्यादयः।

(ख) **जैविकीयानि ईधनानि** – काष्ठानि, कोलः, जैविकीयडीजलम् ।

(ग) **द्रवीयानि ईधनानि** – पेट्रोलियम् पदार्थाः। यथा-डीजल, पेट्रोल, मृत्तिकातैलम्।

(घ) **नाभिकीयानि ईधनानि** – यूरेनियम् विखण्डनजनितम् ईधनानि।

---

[1] **ऋग्वेद** 1/98/1

**पर्यावरणम् –**

अध्ययनेऽस्मिन् पर्यावरणस्य क्षेत्रम् अतीव विस्तृतो भवति। अस्माकं चतुर्दिके व्याप्तप्राकृतिकपरिवेशः एव पर्यावरणं भवति। यथा- शुक्लयजुर्वेदे वर्णितम्–

**द्योः शान्तिः पृथ्वीशान्तिः--------------शान्तिः शान्तिः।।**[2]

वैदिकसाहित्यानुगुणं जैविकानुक्रियाणां प्रभावयुक्तकारकाणां योगः एवं जैविकीयपरिस्थिनां भौतिक-अभौतिकतत्त्वानां योगः एव पर्यावरणं भवति। यत्र सूर्यः, वरूणः, वायुः, अग्नियोः रक्षार्थं काम्यते।

**वसू रूद्रा पुरूमन्त् वृधन्ता दशस्यतं नो वृषणानभिष्टौ।**

**दस्रा ह यद्रेक्या औचद्यो वां प्रयत्सस्राथे अकवाभिरूती।।**[3]

**उत्तमपर्यावरणनिर्माणे उत्तमस्य ईधनस्य वैशिष्ट्यानि-**

उत्तमं ईधनं ज्वलनशीलः, उष्माप्रदाता, शक्तेः परिमाणम् इत्यादीन् अनेकानिवैशिष्ट्यानि भवन्ति। यत् जनानां स्वास्थ्यस्य कृते अनूकूलं भवेत्।

**प्रदूषणस्य अर्थः –**

प्रदूषणम् नाम प्रकृतेः जैविकपरिवेशे भौतिक-आध्यात्मिक-सामाजिकराष्ट्रिय-वैश्विकस्तरे मानवीयमूल्यानाम् असन्तुलनम् एव इति। यत्र अशुद्धजलवायुः, अशुद्धखाद्यपदार्थाः अथवा अवाञ्छनीयानि तत्त्वानि, व्यवहाराणि च सम्मिलितानि भवन्ति। एतदन्तरं पर्यावरणिकसंरक्षणसमस्याः जायन्ते।

**प्रदूषणस्य कुप्रभावः-**

1- कस्यचिद्पि प्रदूषणं सृष्टेः मानवीयमूल्यानां कृते अतिविनाशको भवति।
2- पर्यावरणिकप्रदूषणप्रभावैः मृदा - जलवायु - स्वास्थ्य - भोज्यपदार्थ – पशु – प्राणी - प्राकृतिकस्रोतांसि इत्यादीनां जीवनमूल्यानां सर्वाणि साधनानि च असन्तुलितं भूत्वा जनजीवनं विनष्टानि भवन्ति।
3- परिवेशप्रदूषणैः पृथिव्याः तापमानं दिनं दिनं प्रति वृद्धिमाप्नोति। यस्मात् प्रभावात् अखिलामही ज्वाल्यमानं दृश्यते।

[2] **शुक्लयजुरवेद** 36/ 17

[3] **ऋग्वेद** (1/158/1

**उत्तमपर्यावरणनिर्माणार्थम् ईधनानां संरक्षणविधानानि –**

सर्वे जानन्ति एव प्रकृतेः ईधनसंसाधनानि सीमितानि सन्ति। ये मानवीयजैवपरिवेशे सर्वेभ्यः जीवेभ्यः अतीव आवश्यकी भवन्ति। अतः तेषां अमूल्यसंसाधनानां संरक्षणं नागरिकानां परमोधर्मः विद्यते। अतः अनुक्रमेऽस्मिन् अधोदत्तानां प्रयासानामोपरि ध्यातव्यम्-

1- सर्वकारीय-गैरसर्वकारीयस्तरेषु जनेभ्यः पादपानां रोपणकार्यक्रमे (Forestry) अधिकाधिकं भागग्रहणं कुर्यात्। वानकीकरणमाध्यमेन (Forestry) प्रदूषणरहितपर्यावरणस्य विकासः भविष्यति। तत्र विषाक्तरसायनानाम् अनुप्रयोगे सति उत्तमेधनानां प्रयोगैः उत्तमपर्यावरणस्य निर्माणे गतिः भवितुं शक्यते । यथा- मत्स्यपुराणे उक्तम् -

**दशकूपसमावापी, दशवापी समोह्रदः।**
**दशह्रदसमः पुत्रः, दशपुत्रः समो द्रुमः।।**[4]

2- उत्तमपर्यावरणनिर्माणे ईधनप्रयोगेषु वैदिकसंस्कृतिं प्रति पुनरावर्तनम् भवेत्। येन अधिकपरिमाणे वैदिकयज्ञानाम् आयोजनं सम्भवति।

3- उत्तमपर्यावरणनिर्माणे शास्त्रीयविधीना अध्ययनाध्यापनं प्रति जनजागरणं भवेत्।

4- ईधनसंरक्षणे संस्कृतसाहित्येषु प्रदत्तोपायानाम् अनुप्रयोगः वैश्विकस्तरेषु करणीयम्। यत्र सर्वकारीय साहाय्यं संरक्षणं च भवेत्।

5- उत्तमपर्यावरणनिर्माणे ईधनप्रयोगे शास्त्रानुसारम् अनुसन्धानप्रवृत्तिं प्रति विशिष्टकार्यशालानाम् आयोजनम् अभिप्रेरणाप्रदानञ्च भवेत्।

6- प्रकरणेऽस्मिन् सर्वकारीयतन्त्रोपागपक्षतः संस्कृतक्षेत्रेषु अधिकाधिकं वित्तीयसाहाय्यं भवेत्, येन उत्तमपर्यावरणविकसने वैदिकरीत्या अधिकाधिकम् अनुसन्धानं भवितुं शक्नोति।

7- अक्षयोर्जानाम् अनुप्रयोगः अधिकाधिकं भवेत्। अक्षयोर्जायाः अनुप्रयोगसम्बद्धं दृष्टान्तं ऋग्वेदे द्रष्टव्यम्-

**अनेन वो मरूतो यामो अस्त्वनश्वश्चिद्यमजत्यरथीः।**
**अनवसो अनभीशु रजस्तूर्वि रोदसी पथ्या याति साधनः।।**[5]

---

[4] मत्स्यपुराणम्

[5] **ऋग्वेद्** 6/66/7

उपरोक्तमंत्रे अणुशक्त्या उत्पादितानाम् ईधनानाम् अनुप्रयोगसम्बद्धे स्पष्टं भवति यत् सैनिकानां यानं काष्ठ-कोयला-पेट्रोलियमेत्यादीन् पदार्थान् अनुप्रयोगं विना एव संचालितं भवेत्। अत्र तादृशः अविज्ञातम् अजक्षयोर्जायाः उत्तमेधनस्य सूचना प्राप्यते। अतः एतद् विषयेअनुसन्धानम् अवश्यं करणीयम्।

8- वर्षाजलस्य भण्डारणं कृत्वा अधिकपरिमाणे जलविद्युतम् उत्पाद्य उत्तमपर्यावरणनिर्माणं संभाव्यते ।

9- अणुशक्तेः विखण्डनाधारितेधनानां प्रयोगः (Uses of Atomic Nuclear Energy) भवेत्।

10- मोटरयानानां प्रयोगः न्यूनातिन्यूनम् एव करणीयम्। यदा अत्यावश्यकी भवति तदैव मोटरयानानां प्रयोगःभवेत्।

**उपसंहारः**

जैवमण्डले मानवः, उत्तमपर्यावरणम्, ईधनसंसाधनानि च अमूल्योपहारः विद्यते। एषां मध्ये समुचितं समन्वयेन एव उत्तमपर्यावरणनिर्माणं सम्भवति। वैश्विक-राष्ट्रिय-सामाजिक-आध्यात्मिक-भौतिकविरासतानां संरक्षणं शास्त्रेषु प्रदत्तैः शास्त्रीयसिद्धान्तैः, आधुनिकप्रौद्योगिकसिद्धान्तैः, तकनीकीभिश्च साहाय्येन ईधनसंसाधनानां समन्वितनुप्रयोगः एव उत्तमपर्यावरणनिर्माणम् एव मूलमंत्रं विद्यते। येन वैश्विकसुखशान्तेश्च आधारःभवितुं शक्नोति। यतो हि श्रीमद्भग्वद्गीतायां भगवान् श्रीकृष्णेनोक्तम्-

**यथा हि एकेन चक्रेण न रथस्य गतिः भवेत्।**
**एवं पूरुषकारेण विना दैवं न सिध्यति।।**[6]

अर्थात् यथा हि एकेन चक्रेण रथस्य गतिः कदापि न संभवति तथैव एकस्य एव पक्षस्य सिद्धान्तैः अनुप्रयोगैः वा कश्चिदपि कार्ये साफल्यतां न संभवति। अतः यावत् शास्त्रेषु प्रदत्तैः सिद्धान्तैः सह आधुनिकतकनीकीनां द्वयोः पक्षयोः संसाधनानां समन्वितनुप्रयोगः न भविष्यति तावत् कस्यचिदपि उद्देश्यपूर्तये साफल्यतां न प्राप्यष्यते। यथा प्रकृतिः इयम् माया-व्रह्म अनयोः द्वयोः समभागैः समन्वयैः सृष्टेः सम्यकसंचालनं भवति तथैव वैज्ञानिकशास्त्रीयद्वयोः संसाधनानाम् अनुप्रयोगः अवश्यमेव भवेत्। अतः शास्त्रीय-आधुनिकसिद्धान्तानाम् उपलब्धसंसाधनानां समन्वितानुप्रयोगः एव उत्तमपर्यावरणनिर्माणे ईधनसंरक्षणप्रक्रियायाः प्रयासः उत्तमप्रयासः भवेत्।

---

[6] **श्रीमद्भग्वद्गीता**

# अग्नेः आराधनम्

**नेतेटि. नृसिंह राज स्मृति**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु. 906**

समस्तकर्मसु श्रेष्ठतमत्वेन विश्वेऽस्मिन् यज्ञ एव परमाराध्यः अस्ति। पुराणकालादारभ्य विविधाः यज्ञाः क्रियमाणाः सन्ति। ब्राह्मणग्रन्थेषु यज्ञस्य महती महिमा महदादरश्च वर्तते यत्-विश्वस्य सर्वश्रेष्ठदेवता प्रजापतिः ब्रह्मापि यज्ञरूपमेव अस्ति। तदेवोच्यते भगवद्गीतायां श्रीकृष्णः -

**"अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः**
**यज्ञाद्भवन्ति पर्जन्यो यज्ञः कर्मसमुद्भवः।**
**कर्मब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥ "**

अपि च -

**"यज्ञादेव सृष्टिः सम्भूता"** इति वैदिकतत्त्वस्य परिचयः पुरुषसूक्ते प्राप्यते। अग्निहोत्रस्य अनुष्ठानेन प्राणी सर्वपापात् विमुच्यते। तदेव - **"सर्वस्मात् पाप्मनो निर्मुच्यते य एवं विद्वानग्निहोत्र जुहोति।" (शतपथब्राह्मणम्)**

देवादीनां उपकाराः कृतज्ञतया नित्यं स्मर्तव्याः मानवैः। मानवस्य जीवनं चतसृषु दशासु भवति। ते- ब्रह्मचर्य- गृहस्थ- वानप्रस्थ- सन्यासश्चेति। तेषु प्रधानः भवति गृहस्थाश्रमः। यथाशक्ति गृहस्थः अग्नेः आराधनं कुर्यात्। तादृशं आराधनं कुर्यात्। तादृशं आराधनं यज्ञेन साध्यते। यज्ञः नाम देवपूजा इत्यर्थः। यज्ञाः पञ्चविधाः भवन्ति। ते च -

१. **देवयज्ञः**

२. **पितृयज्ञः**

३. **भूतयज्ञः**

४. **ब्रह्मयज्ञः**

५. **नृयज्ञः**

एतेषु देवयज्ञः गृहस्थेन स्वस्य इष्टदेवतायाः उपासनाय, अनुग्रहाय च इष्टकार्यार्थसिद्ध्यर्थं क्रियते। अस्यैव अग्निहोत्रमिति नामान्तरं विद्यते। गृहस्थः स्वगार्हपत्याग्नौ अग्निं समर्पयित्वा भगवदनुग्रहं प्राप्नोति। तर्हि गार्हपत्याग्निः नाम कः इति पृष्टे सति उच्यते -

**" ब्रह्मणे गार्हपत्याय विष्णवे दक्षिणाग्नये।**
**शिवायावहनीयाय शक्त्यै वेद्यै नमो नमः॥"**

अर्थात् गार्हपत्याग्निः ब्रह्मणः स्वरूपम्, दक्षिणाग्निः विष्णुस्वरूपम्, आहवनीयाग्निः शिवस्वरूपमिति उच्यते। त्रिमूर्तिस्वरूपाणां एतेषां त्रयाणामग्निनां आराधनायै एका वेदिका भवति त्रयाणां मध्ये। तस्यां वेदिकायां यज्ञसम्बद्धसामग्रयः स्थापयन्ति। सा एव शक्तिरूपेण भवति। अस्य नाम अस्ति "त्रेताग्निः" इति। अस्य आहिताग्निः, श्रोताग्निः इत्यपि नामान्तराणि भवन्ति।

इमम् आराधनं गृहस्थः प्रतिदिनं प्रातस्सन्ध्याकालेषु आचरणीयं भवति। अपि च पौर्णिमायां पौर्णमासेष्टिः, अमावास्यायां दर्शेष्टिः इति द्विधारूपेण अग्निहोत्राराधनं क्रियते गृहस्थेन। अनया आराधनया गृहस्थः कर्ममार्गे त्रिमूर्तिनां आराधनफलं प्राप्नोति। एतदेव "अग्निहोत्राराधनम् " इत्युच्यते। साधारणतया यागनिर्वहनार्थं चत्वारः ऋत्विजः भवन्ति। ते च- १. ब्रह्मा २. अध्वर्युः ३. होता ४. यजुः इति।

एते चत्वारः एव इदं कार्यं कर्तुमर्हाः। अग्न्याराधने पञ्चमहायज्ञसम्बन्धिताः केचन मन्त्राः अपि उक्ताः। यथा - " अन्नपते अन्नस्य नो देहि ", भूतेभ्यः स्वाहा, पितृभ्यः स्वाहा..... इत्यादयः। तथैव -

**" काण्डद्वयोपपाध्याय कर्मब्रह्मस्वरूपिणे।**
**स्वर्गापवर्गरूपाय यज्ञेशाय नमो नमः ॥ "**

अर्थात् कर्मणः स्वरूपमेव ब्रह्मस्वरूपम्। श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णोक्तरीत्या कर्मणा ये मोक्षं प्राप्तुमिच्छन्ति ते अग्नेः आराधनेन प्राप्नुवन्ति इति। अनेन आराधनेन अन्नादिशुद्धिः पापक्षयश्च भवति। धर्मार्थकाममोक्षाणां प्राप्तिः भवति। यथा भगवद्गीतायां -

"यज्ञशिष्टाशिनः सन्तो मुच्यन् ते सर्वकिल्बिषैः", "तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्" इत्यादिभिः गीतोक्तवचनैः यज्ञानुष्ठानफलं ज्ञायते।

# पाठ्यक्रमे संस्कृतस्य स्थानम्

## (Place Sanskrit in Curriculum)

**प्रियदर्शिनी ज्योतिस्मिता बारिक्**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 827

**पाठ्यक्रमः (Curriculum)**

शब्दस्योत्पत्तिः लैटिन भाषाया : Curere शब्दाज्जाता । अस्यार्थः धावनक्षेत्रमिति (Race- course) अस्ति । वस्तुतः इदमेकं धावनक्षेत्रमेवास्ति , यस्मिन् जनाः स्वलक्षमधिगन्तुं धावन्ति।

छात्राणां सर्वांगीणविकासाय विद्यालयस्य सम्पूर्णजीवनमेव पाठ्यक्रमे भवति । यः छात्राणां जीवनस्य सर्वान् पक्षान् प्रभावयति तेषां सन्तुलितविकासे साहाय्यं भवति । संस्कृतभाषासम्बद्धप्रश्नोऽयम् उदेति यत् पाठ्यक्रमे अस्याः भाषायाः स्थानं कीदृशं भवेत् ? अस्य प्रश्नस्य सन्दर्भे सर्वप्रथमं तु इदं चिन्तनमावश्यकमस्ति यत् संस्कृतम् ' न केवलमेका भाषा एवं वर्तते अपि तु संस्कृतं भारतीयपरम्परासभ्यतयोश्च प्रतीकमस्ति । अतः देशस्य सर्वेषु विद्यालयेषु महाविद्यालयेषु च संस्कृतशिक्षायाः समुचितव्यवस्था स्यात् ।

**प्रथमपक्षः-** परमत्र केचन आधुनिकविद्वांसः मन्यन्ते यत् संस्कृतं केवलं ब्राह्मणानां भाषा, पूजासु कर्मकाण्डेषु प्रयुक्ता भवति । आधुनिकविज्ञानयुगे संस्कृताध्ययनस्य प्रयोजनं नास्तीति।

**द्वितीयपक्षः**- अन्य केचित् विद्वांसः संस्कृतम् अनावश्यकं न मन्यन्ते । किन्तु आधुनिकविषयाणाम् अध्ययनस्याधिकं महत्त्वं कल्पयन्ति । एते संस्कृताध्ययनं प्रति तटस्थाः, उदासीनाः वा भवन्ति । एते तु पाठ्यक्रमे संस्कृतं वैकल्पिकविषयरूपेण पाठवितुमिच्छन्ति । एतेषां मते संस्कृतं काचित् कठिना भाषा पाठ्यक्रमे संस्कृतस्य योजने छात्राणां क्लेश अधिकः भवति । पाठ्यक्रमश्च विस्तृतो भवति । अतः संस्कृतम् अनिवार्य न करणीयम् ये छात्रा संस्कृतं पठितुमिच्छन्ति तेषां कृते ऐच्छिकविषयरूपेण पाठनीयम् ।

**तृतीयपक्ष**:-अपरे केचित् विद्वासः पाठ्यक्रमे संस्कृतम् अनिवार्यविषयः भवेदिति समर्थयन्ति। संस्कृतं सर्वासां भारतीयानाम् आर्यभाषाणां जननी भवति । संस्कृतस्य अध्ययनं भारतीयभाषाणामध्ययने सहायकं भवति । छात्राः भारतीयसंस्कृति संस्कृताध्ययनेन ज्ञातुं प्रभवन्ति । छात्रेषु राष्ट्रस्य एकतायाः अखण्डतायाश्च भावनायाः विकासाय संस्कृतं सहायकं भवति । अतः संस्कृताध्यापनम् अनिवार्य स्यात् ।

# संस्कृतस्य वैशिष्ट्यम्

**बेदप्रिया साहु**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 828

प्राचीनकाले भारतस्य जनभाषा संस्कृतम् आसीत् इति सर्वे जनाः स्वीकुर्वन्ति । संस्कृतस्य महत्वं वर्तमानपरिपेक्षे अधिकम् अस्ति । अमेरिकायाः सर्वोत्कृष्टनुसन्धानसंस्था अस्ति **'नासा'** तस्याः अभिमतम् अस्ति यद् – आन्तरिक्षे सम्बादप्रेषयितुं संस्कृतमेव उपयुक्तं भवति। किमर्थम् इत्युक्ते यदा 'नासा' इति संस्थायाः वैज्ञानिकाः अन्यभाषायां सम्वादं प्रेषयन्ति तदा सम्वादान् सम्यक्तया अन्तरिक्षं नैव उपगच्छति, किन्तु संस्कृतभाषायाः इदमेव वैशिष्ट्यं वर्तते यत् संवादानां विपरीतम् अवस्थायामपि न कोपि भेदः भवति। एतदर्थं वैज्ञानिकाः संस्कृतभाषयामेव सम्वादान् प्रेषयितुं समर्थाः सञ्जाताः। इदानी केचन जनाः वदन्ति यत् संस्कृतभाषा केवलं पौरोहित्य, कर्मणान् कृते एव अस्ति, किन्तु असमिन् अर्थे सिद्धान्ताः तर्कहीनाः वर्तन्ते। संस्कृते ज्ञानस्य सर्वविधाः समुपलब्धाः सन्ति इति विद्वांसः स्वीकुर्वन्ति । अस्माकं परमकर्तव्यम् अस्ति यत् भारतीयसंस्कृतेः रक्षणायः भारतस्य प्रतिष्ठां स्थापनायञ्च संस्कृतभाषायाः अध्ययनम् अध्यापनम् च नितराम् अस्माभिः कर्तव्यानि।

# अहिंसा परमो धर्मः

**बिकाश रायः**
**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 831

**प्रस्तावना**

हिंसनं हिंसेति । कस्यापि पीडनं दुःखदानं वा हिंसेति कथ्यते । हिंसा त्रिविधा भवति- मनसा, वाचा, कर्मणा च । मनुष्यो यदि कस्यचित् जनस्य अशुभं हानिं वा चिन्तयति, सा मानसिकी हिंसा वर्तते। यदि कठोरभाषणेन, कटुप्रलापेन, दुर्वचनेन, असत्यभाषणेन वा कमपि दुःखितं करोति, तर्हि सा वाचिकी हिंसा भवति । यदि जनः कस्यापि जीवस्य हननं करोति, ताडनादिना वा दुःखं ददाति, तर्हि सा कायिकी हिंसा भवति । एतासां तिसृणां हिंसानां परित्यागोऽहिंसेति निगद्यते ।

**अहिंसाया: उपयोगिता लाभाश्च**

संसारे अहिंसायाः महती उपयोगिता वर्तते । गवादीनां, पशूनां च यदि हननं न भवति तर्हि देशे धनधान्यस्य दुग्धादीनां च न्यूनता न स्यात् । अहिंसया पशवोऽपि मनुष्येषु प्रेमं कुर्वन्ति। शत्रवोऽपि अहिंसया मित्राणि भवन्ति। मनुष्यस्य आत्माऽपि अहिंसया सुखमनुभवति। अहिंसायाः प्रतिष्ठायां सर्वे सर्वत्र ससुखं निर्भयं च विचरन्ति । एतत्तु सर्वैरनुभूयते एव यत् न कोऽपि जगति स्वविनाशमिच्छति । सर्वे जनाः सुखमिच्छन्ति । यदि एवमेव पशुपक्षिणामपि विषये चिन्त्येत तर्हि न कस्यचिद् हननं कश्चित् करिष्यति । अतएव ऋषिभिः महर्षिभिश्च '**अहिंसा परमो धर्म**' इत्यङ्गीकृतः । उच्यते च -

**श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।**
**आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १ ॥**
**आत्मौपम्येन भूतेषु, दयां कुर्वन्ति साधवः ॥ २ ॥**
**आत्मवत्सर्वभूतेषु यः पश्यति स पश्यति ॥ ३ ॥**

अहिंसैव धर्ममार्गः । अतएव भगवान् बुद्धः, भगवान् महावीरः, महात्मा गान्धिमहोदयश्च अहिंसाया एवोपदेशं दत्तवन्तः । अहिंसायाः प्रचारे एवैतेषां जीवनं व्यतीतम्। महात्मनो गांधि-महोदयस्य संरक्षणे अहिंसाशस्त्रेणैव भारतवर्षं पराधीनतापाशं छित्त्वा स्वतन्त्रतामलभत् । अहिंसाशस्त्रेणैव भीता विदेशीयाः भारतं त्यक्त्वा पलायिताः । एषोऽहिंसाया एव महिमाऽस्ति।

यदि संसारे हिंसायाः प्रसारः स्यात् तदा न कोऽपि मनुष्यो देशो वा संसारे सुखेन शान्त्या च स्थातुं शक्नोति । हिंसया मनुष्यः क्रूरः, निर्दयः सद्भावहीनश्च भवति । हिंसके सत्यं, त्यागः, तपस्या, दया, क्षमा, प्रेम, पवित्रता विमलबुद्धिश्च न भवन्ति । अतः सर्वैरपि सर्वदा सर्वभावेन अहिंसाधर्मः पालनीयः, लोकस्य च कल्याणं कर्तव्यम् ।

# अर्यन् सिद्धान्तः

**बि. वि. श्रीपतिः**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु.** 911

आर्याक्रमणसिद्धान्तः आदौ पाश्चात्यैः प्रतिपादितः । संस्कृतभाषामधीतवता मोक्षमुल्लरेण संस्कृतभाषायाः ऐरोप्यभाषाकुले च साम्यता वर्तत इत्यब्रवीत् । (प्रथमः विलियं जान्स् इत्युल्लेखोऽप्यस्ति) किञ्च आर्याः भारतीयान् द्राविडान् जिगीषया आगताः । तथा च ऋग्वेदे वर्णितः दाशरथयुद्धः नाम आर्यद्राविडयोर्मध्ये प्रवृत्ते युद्धे जिताः सुधासराः आर्याः इति, पराजिताः दाशरथाः अनार्याः इति च सम्बोधिताः "मोर्टिमीर् वीलर्" अनुसारं पुरातत्वशास्त्रीयवेधने लब्धाः त्रयस्त्रिंशत् जीवाश्माः युद्धे मृतानां सिन्धूजनानां वर्तते इति समबध्यत । एवं रीत्या पाश्चात्याः मायाजालं सृष्ट्वा वयं मूलतः द्राविडाः, आर्याः भारतमागत्य वैदिकसंस्कृतिं, जातिपद्धतिं च प्रसारितवन्तः इत्युक्त्वा "डिवैड् आन्ड् रूल पालिसी" इत्येतन्मूलकेन भारतीयान् वैचारिकतया विभाजितवन्तः । तस्मात् उत्तरदेशे वसन्तः श्वेतवर्णीयाः आर्याः द्राविडान् दक्षिणदेशं बलात् प्रेषितवन्तः इति प्रतिपादितवन्तः । एवंरीत्या कृष्णश्वेतविविक्ततामाश्रित्य विभाज्य शासनकरणस्य नीतिः ब्रिटीश् यवनानामासीदिति स्वातन्त्र्यप्राप्त्यनन्तरं वा भारतीयानाम्मनस्सु सुस्पष्टमभवत्। किन्तु आर्यद्राविडसिद्धान्तः जीवति स्म।

हरियाणराज्यस्य राकिगडे लब्धस्य एकस्याः स्त्रियः जीवाश्मः पञ्चशतोत्तरचतुस्सहस्रवर्षप्राक्तनं वर्तते । अस्मिन् जीवाश्मे अण्डमानदेशीयं 'जिन्' लब्धमस्ति । अस्मिन् कीदृशोऽपि आर्यजनानां जिन्-अंशः न लब्धः । तस्मात् पुरातत्वशास्त्रीयविभागानुसारं हडप्पन्-संस्कृत्यां वातावरणपरिवर्तनेन आहाराभावेण च जनाः बहु क्लेशे आसन् । तदा नाम 3,000 – 2,500 ईशवीयवर्षपूर्वे आर्याः हिन्दूकुशपर्वतं लङ्घित्वा आगताः इति तेषां मतम् । एवंरीत्या तत्कालस्थार्याक्रमणसिद्धान्तः अधुना आर्यसङ्क्रमणसिद्धान्तरूपेण परिवर्तितोऽस्ति ।

यदि आर्याः मूलतः ऐरोप्याः सन्ति, वैदिकसंस्कृतिः संस्कृतञ्च तेषां वर्तते तर्हि वर्तमानयुरोपदेशे कुत्रापि हिन्दूसंस्कृतेः एकं चिह्नमपि नास्ति इत्यत्र किं कारणम् ? मूलमदृढं वर्तते चेत् वृक्षः कथं वर्धेत ? किञ्च पुरातत्त्वविभागे रामायणं सत्यघटना इति वक्तुं वैज्ञानिकः आधारः नास्ति । परन्तु अमेरिकीविश्वविद्यालयद्वयस्य अध्ययनानुसारं भारतस्य श्रीलङ्कायाश्च मध्ये विद्यमानस्य समुद्रस्य अधः निगूढः सेतुः( रामसेतुः) मानवनिर्मितः इति निर्णयः कृतोऽस्ति । अयं सेतुः न्यूनातिन्यूनं ७,००० वर्षेभ्यः प्राक्तनः वर्तते । अनेन रामायणस्य प्राचीनता कियती वर्तते इति वयं ज्ञातुं शक्नुमः । यदि आर्याः ४००० वर्षपूर्वमागताः तर्हि तत्कालादपि ७००० वर्षेभ्यः प्राक्तनस्य

रामसेतोः निर्माणं कथं सम्भवति? यदि हडप्पान् अथवा सिन्धुसभ्यतायाः जनाः द्राविडाः इति वदामस्तर्हि तेऽपि आफ्रिकादेशादागताः आदिवासिनां तथा पश्चिमेरान्-देशजनजातीनां मिश्रितरूपाः सन्ति । एवञ्च तेऽपि आप्रवासं कृतवन्तः इति सिद्ध्यति । के तर्हि मूलभारतीयाः? किमर्थमद्यापि द्रविडभाषाद्वारा सिन्धुसभ्यतायाः भाषामवगन्तुं वैज्ञानिकाः न शक्नुवन्ति? किञ्च वयं द्रविडाः स्मः इति उद्यमानेषु शतप्रतिशतम् द्रविडानां D.N.A. लभ्यते। आर्य-द्राविडजातीययोः अन्तरप्रजननकारणात् वर्तमानभारतीयेषु द्वयोरपि जातियोः मिश्रितः D.N.A अस्ति । यद्येवं तर्हि के द्रविडाः के च आर्याः? **History is a collection of lies agreed upon.**

**Napoleon Bonaparte**

# संस्काराः

**संदीप चन्द्र बिजल्वाण**
**शिक्षाशास्त्री द्वितीयवर्षम् , अनु.913**

संस्कारशब्दस्य अनेके समानार्थाः सन्ति। यथा-संस्करणं, परिष्करणं, विमलीकरणं, विशुद्धीकरणम् इति। 'सम्' उपसर्गपूर्वकं 'कृञ करणे' इति धातुना सह 'घञ्' इत्यस्य प्रत्ययस्य योजनोत्तरं 'सुट्' योजिते संस्कारशब्दः निष्पद्यते। यथा मलिनवस्तु प्रक्षाल्य शुद्धं पवित्रं च क्रियते तथा च सुवर्णः अग्नौ तापयित्वा शुद्धः क्रियते, तथैव संस्कारैः जन्मजन्मानारेभ्यः सञ्चिताः मलरूपिणः निकृष्टकर्म संस्काराः दूरीभवन्ति । अत एव हिन्दुमान्यतायां बालकस्य गर्भप्राप्तेः प्राग्तः जन्मपर्यन्तं ततः वृद्धे सति मृत्युपर्यन्तं संस्काराः आचर्यते। उक्तं चास्ति यत्

**ब्रह्मक्षत्रियविड्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।**
**निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ।**
**(याज्ञवल्क्यस्मृतिः १.१०)**

अर्थात्, गर्भाधानात् अन्त्येष्टिपर्यन्तं द्विजमात्राणां सर्वे संस्काराः वैदिकमन्त्रैः भवन्ति। संस्कारेभ्यः एव मनुष्यः द्विजत्वं प्राप्नोति इति। (सङ्ख्यामतभेदः) संस्काराणां विषये विभित्रेषु मुनिषु मतभेदाः सन्ति। बहुष्वर्थेषु संस्कारशब्दस्य प्रयोगो दृश्यते परिष्करण-भूषण- प्रशिक्षण-संस्कृत-स्वशुद्धिक्रिया-धार्मिकविधानादिषु विभिन्नेष्वर्थेषु प्रयुक्तोऽयं संस्कारशब्दः । शास्त्रान्तरेष्वपि अस्य स्वरुपं भिन्नतया वर्णितम् । वेदान्तिनां मते "देहे समुत्पद्यमानः स्नानाचमनादिजन्यजीवधर्मः संस्कारः । भावस्य व्यक्तिकरणार्थमात्मव्यञ्जनशक्तिरेव संस्कार इति नैयायिकमतम्। धर्मशास्त्रे तु मानवस्य कायिक-वाचिकपरिशुद्धयर्थं धर्मिकक्रियानुष्ठानेनात्मनि जायमानो धर्मविशेषः संस्कार इति प्रतिपादितम्। सामान्यतः धार्मिकक्रियाकल्पार्थे संस्कारशब्दस्य व्यवहारो दृश्यते व्याकरणे। दोषापनोदनपूर्वकं गुणाधानमेव संस्कार इति फलितम् । गर्भाधानादारभ्यान्त्येष्टिं यावत् त्रयोदशसंस्काराः इति मनुना प्रतिपादितम् । ते च यथा – गर्भाधानम्, पुंसवनम्, सीमन्तोन्नयनम्, जातकर्मम्, नामकरणम्, बहिर्निष्क्रमणम्, अन्नप्राशनम्, कर्णवेधनम्, चूडाकर्मः, उपनयनम्, केशान्तः समावर्त्तनम्, विवाहः अन्त्येष्टिश्चेति। संस्कारशब्दस्य प्रयोगः बहुधा भवति । मीमांसादर्शने अस्य संस्कारशब्दस्य अर्थः यज्ञाङ्गभूत पुरोडाशादि शुध्यर्थं प्रोक्षणविक्षणादिना सम्पन्ना भवति । अद्वैतवेदान्तिमतानुसारेण शारीरिकक्रियाणां मिथ्याक्षेपः संस्कारः इति। नैय्यायिकभावना अभिव्यक्तिहेतुना आत्मव्यञ्जकशक्तिः संस्कारः कथ्यते। मानवजीवने संस्काराः महत्त्वपूर्णाः सन्ति। संस्कारैः मनुष्यत्वं मानवता एवं व्यक्तित्वविकासश्च भवति। भिन्नेषु ग्रन्थेषु

संस्काराणां संख्या भिन्ना दर्शिता वर्तते । जन्मना मानवः अपूर्णः भवति । संस्कारैश्च तत्र पूर्णता आगच्छति । एते संस्काराः भारतीयसंस्कृती विशेषतः हिन्दुषु क्रियन्ते स्म अद्यत्वेऽपि तस्य विशेष महत्त्वम् अस्ति । यद्यपि अद्यतनस्य व्यस्त जीवने संस्कारः सम्पूर्णतया विधिना अनुसरणं न भवति तथापि हिन्दुभिः परिवर्तितस्वरूपेषु तस्य अनुसरणं कुर्मः । वस्तुतः हिन्दुधर्मस्य एतत् सर्वकारम् मानवस्य उत्तमसन्तुलितव्यक्तित्वस्य निर्माणे अतीव महत्त्वपूर्णभूमिकां निर्वहन्ति। आधुनिकसभ्यतायाः प्रभावेण एतेषां संस्कारानाम् स्वरूपं निश्चितरूपेण परिवर्तितम् अस्ति । परन्तु अयं सर्वकारः अद्यत्वे अपि स्वस्य आदर्शानां, उत्तममानवमूल्यानां, विश्वासानां च कारणेन यथा प्रासंगिकः अस्ति, यथा प्राचीना भारतीयसंस्कृती अपि आसीत् । अयं सर्वकारः चरित्रनिर्माणस्य मुख्याधारः इति वक्तुं शक्यते। भारतसर्वकारः व्याख्यायते यत् जीवनस्य समाप्तिः मृत्युना न भवति।

## संस्कृतशिक्षकस्य महत्त्वम्

**सुमन्त साहू**

**शिक्षाशास्त्री प्रथमवर्षम् , अनु.** 819

आधुनिकभारते संस्कृतशिक्षकस्य स्थानम् अतीव महत्वपूर्णम् अस्ति। सर्वत्रापि संस्कृतभाषायाः शिक्षणं हिन्दी माध्यमेन अथवा क्ष्येत्रीय भाषामाध्यमेन प्रचलति। प्ररन्तु संस्कृतविषयस्य पाठनं संस्कृतभाषायाः एव भवतु इति संस्कृतशिक्षकस्य प्रधानकार्यम् । संस्कृतशिक्षकः सरलमानकसंस्कृतेन पाठयेत्। यद्यपि वाद्यालयेषु सम्प्रति संस्कृतभाषायाः सह इतरविषयाणाम् अध्ययनाध्यापनं दृश्यते, तथापि संस्कृताध्यापकः निरन्तरं सरलसंस्कृतसम्भाषणेन विविधदृश्यश्रव्योपकरणानां प्रयोगेण संस्कृतं रूचिकरं सरसं च कृत्वा पातयेत्। कक्षायां अन्तः संस्कृतभाषायाः पाठनेन साकं छात्राणां रूचिः प्रवर्तयेत्।संस्कृतशिक्षणे नवाचारः भाषाकौशलेषु दक्षता भाषाभ्यासाय अवसरप्रदानं नवीन शिक्षणपद्धतीनां प्रयोगः इत्येतानि संस्कृतशिक्षकस्य लक्षणानि ।

संस्कृतशिक्षकस्य शुद्धोच्चारणम् संस्कृतभाषायाः ज्ञाता, संस्कृतसाहित्यस्य ज्ञानं संस्कृतभाषायाः प्रति अभिप्रेरकः संस्कृतव्याकरणस्य ज्ञानं प्रशिक्षणप्राप्तः अनुभवी कुशलोऽभिनेताश्च भवेत् । एतानि सर्वाणि कौशलानि कृत्वा विद्यालयं प्रति गन्तव्यम् । विद्यालये संस्कृतवातावरणनिर्माणाय प्रयासः कुर्यात्, ताभिः सोपनानि आधरिकृत शिक्षकः पाठयेत्। कक्ष्योश्चितस्वरेण शुद्धतया, स्पष्टतया गद्यनियमानुसारञ्च आदर्शवाचनं कुर्यात् । पाठनसमये छात्राः अवगच्छन्ति वा न इति विषये अवधानं देयम्।

संस्कृतध्यापकः छात्रैः साकं निरन्तरं संस्कृतसम्भाषणेन छात्राणां भाषाप्रीतिं व्यवहारकुशलतां च संवर्धयेत्। संस्कृतभाषायाः ज्ञानप्रदानेन साकं छात्राणां चारित्रिकसद्गुणान् वर्धयितुं प्रेरयेत्।एवं रीत्या सर्वत्र संस्कृतस्य प्रचारप्रसारेण संस्कृतमयवातावरणनिर्माणं कर्तुं शक्यते।

**संस्कृतशिक्षकस्य व्यक्तित्वगुणाः**

- सामाजिकव्यवहारः कुशलता।
- उच्चचरित्रम्।
- सहानुभूतिपूर्वकव्यवहारः ।
- दृढसंकल्पः ।
- मधुरभाषिता ।

- मित्रता ।
- कुशाग्रबुध्दिः ।
- आकर्षकव्यक्तित्वम् ।

**संस्कृतशिक्षकस्य भाषासन्दर्भे गुणाः**

- संस्कृतवातावरणनिर्माणम् ।
- संस्कृतेन पाठनम्।
- भाषाकौशलेषु दक्षता।
- भाषिकतत्वेषु दक्षता।
- वर्णोच्चारणम्।
- पाठावबोधनक्षमता।
- स्वाध्यायः।

# बौद्धिकालिकी शिक्षा

**शुचिस्मिता साहू**

**शिक्षाशास्त्री प्रथमवर्षम् , अनु.** 818

बौद्धकालीनशिक्षायाः कर्ता भवति भगवान् बुद्धः । बुद्धेन कृता या शिक्षा सा बौद्धिकी शिक्षा। बौद्धधर्मे चत्वारि आर्यसत्वानि अष्टनिर्वाणमार्गाश्च सन्ति । बौद्धिकशिक्षायाः उद्देश्यानि- बौद्धशिक्षायाः उद्देश्यं वैदिकशिक्षायाः उद्देश्यमिव आध्यात्मिकमासीत् । उभयोः मध्ये समानता दृश्यते । परन्तु बुद्धेन मानवजीवनस्य प्रमुखं लक्ष्यं निर्वाणप्राप्तिरिति स्वीकृतम् । एतल्लक्ष्यं प्राप्तुं बौद्धशिक्षायाः निम्नलिखितानि उद्देश्यानि निरूपितानि सन्ति क. ज्ञानार्जनम्, धार्मिक भावनाया विकासः, सदाचरणम्, सामाजिक विकास, जीविकोपार्जनम्, अहिंसाचरणम् इत्यादयः । बौद्धकालीन शिक्षाव्यवस्था- मूलतः बौद्धशिक्षा धर्मप्रधाना आसीत् । प्रारम्भिककाले बौद्धमठाः केवलं धर्मप्रचारस्य केन्द्राणि आसन् । कालक्रमे एते मठाः विहाराश्च शिक्षाकेन्द्ररूपेण सुप्रतिष्ठिताः । बौद्धसङ्घेन मठेभ्यः पृथक् अथवा स्वतन्त्ररूपेण शिक्षां प्राप्तुमवसरः न प्रदत्तः । सर्वविधशिक्षाः धार्मिकी लौकिकी च भिक्षूणां हस्ते न्यस्ता आसन् । एते गुरुवर्यान् उपाध्याय इति पदेन सबोध्यन्ते । एतेषां काले शिष्यः गुरुणा सह निवसति स्म। एतेषां गृहाणां नामानि विहारः, गरुडाकृतिगृहम्, प्रासादः, हर्म्यम् इत्यादीनि भवन्ति । प्राचीनभावरते चत्वारि नगराणि बौद्धशिक्षाकेन्द्ररूपेण प्रतिष्ठानि आसन् । यथा यष्टिवनम्, वेणुवनम्, सीतावनम्, जेतवनमिति । प्राचीनकाले तक्षशिला (आफगानिस्तान), नालन्दा, बल्लभी (काठियावाड) विक्रमशीलादयः मगधप्रमुखाः विश्वविद्यालयाः बौद्धकाले आसन् । बौद्धशिक्षायाः संस्कारद्वयम् आसीत् । यथा- पब्बज्जा उपसम्पदा च । बौद्धशिक्षायाः प्रारम्भः पव्वज्जा नाम संस्कारेण भवति स्म । अस्यार्थः भवति बर्हिगमनम् इति । अष्टवर्षवयसि अयं शिष्यः अस्मिन् संस्कारे प्रविशति । अस्मिन्नेव काले विनयपिटकं बौद्धगुरवः पाठयन्ति । संस्कारानुसार बालकः प्रवेशात् प्राक् मुण्डितशिरः भूत्वा पीतवस्त्रं धारयति स्म । तदनन्तरं नतशिरः सः भिक्षु प्रणम्य साञ्जलिपूर्वकं शिष्यत्वग्रहणाय तं प्रार्थयति स्म । भिक्षुः तं बालकं स्वीकृत्य स्तरत्रयोच्चारणमेवं कारयति । यथा-

बुद्धं शरणं गच्छामि ।<br>
धर्मं शरणं गच्छामि ।<br>
सङ्घ शरणं गच्छामि ।

बौद्धशिक्षाव्यवस्थायाः द्वितीयः संस्कारः उपसम्पदा इति । बौद्धशिक्षायां स्तरद्वयं भवति । यथा प्राथमिकस्तरः उच्चस्तरश्च । षडवर्षीयः बालकः प्राथमिकशिक्षां प्राप्तुं योग्यः भवति स्म ।

प्राथमिकस्तरे सिद्धिरस्तु इत्याख्यस्य पुस्तकस्य ज्ञानं षड्वर्षपर्यन्तं छात्रेभ्यः दीयते स्म । एषां शिक्षणं पूर्णतः मौखिकमासीत् । किञ्च शिक्षायाः माध्यमः जनभाषा (पाली) आसीत् । सर्वेषां वर्गाणां कृते प्राथमिक शिक्षाव्यवस्था आसीत् । उच्चस्तरे पाठ्यक्रमः द्विविधः आसीत् धार्मिकः लौकिकश्चेति । धार्मिक पाठ्यक्रमे बौद्धसाहित्यम्,धर्मस्य त्रिपिटकसाहित्यम्, जातकग्रन्थाश्च समावेशाः जायन्ते स्म । वौकिकपाठ्यक्रमे तु ज्योतिषम्, चिकित्साशास्त्रम्, दर्शनम्, साहित्यम्, कला, तर्कशास्त्रम्, व्याकरणम् इत्यादीनि शास्त्राणि आसन् । शिक्षणविधयः-

# सङ्घे शक्तिः कलौ युगे

**रामचन्द्र साहुः**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 812

एकमुदेश्यं लक्ष्यीकृत्य बहूनां जनानाम् एकत्वभावनया कार्यकरणम् 'एकता' इत्युच्यते। एकता मनुष्ये शक्तिमादधति। एकतयैव देशः समाजो लोकश्च उन्नतिपथं प्राप्नुवन्ति । यस्मिन् देशे समाजे वा एकताऽस्ति, स एव देशः सकललोकसम्माननीयो भवति ।

संसारे एकतायाः अतीवाश्यकता वर्तते, विशेषतश्चाद्यत्वे । अद्यत्वे संसारे यस्मिन् राष्ट्रे एकताया अभावोऽस्ति, तद् राष्ट्रं सद्य एव परतन्त्रतापाशबद्धं भवति । भारतवर्षम् एवैकताया अभावात् कतिपयवर्षपूर्वं यावत् पराधीनम् आसीत्। यदा भारतीयेषु एकत्वभावनया जागृतिरभूत्, तदा ते स्वाधीनतामलभन्त । अत एवोच्यते- '**संघे शक्तिः कलौ युगे।**' ऋग्वेदस्यान्तिमसूक्ते एकतायाः महत्यावश्यकतां महत्त्वं च प्रतिपादिते वर्तेते। सर्वे जनाः एकत्वभावनया युक्ताः स्युः । तेषां गमनं भाषणं मनांसि हृदयानि संकल्पा विचाराः मन्त्रणादिकं चैकत्वभावेनैव प्रेरितानि स्युः । एवं करणेनैव जगति सुखस्य शान्तेश्च संप्राप्तिः संभवति ।

हितोपदेशे मित्रलाभप्रकरणे एकताया लाभाः साधु प्रतिपादिताः सन्ति । क्षुद्राणि तृणानि यदा रज्जुभावं प्राप्नुवन्ति, तदा गजोऽपि तेन बन्द्धुं शक्यते। जलबिन्दुसमूह एव नदी सागरश्च भवति। मृत्तिकाकणसमूह एव महापर्वतो भवति। तन्तुसमूह एवं सुदृढः पटो भवति । इत्येष एकतायाः एव महिमा । अतएव उच्यते -

**'संघे शक्तिः कलौ युगे।'**

# मानवजीवनस्य लक्ष्यम्

**आयुश कुमार पण्डा**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.**813

मानवजीवनं भगवता दत्तं वरदानम्। मनुष्यजीवनं दुर्लभमस्ति। अतः दुर्लभेण प्राप्तस्य अस्य जीवनस्य सदुपयोगः कर्तव्यः। प्रयोजनं विना जीवनं व्यर्थमस्ति। साधारणः जनः प्रयोजनमुद्दिश्य जीवनं व्यापयति। पशवः तु लक्ष्यविहीनाः सन्ति। पशुमानवयोः मध्ये अयं प्रमुखः भेदोऽस्ति। यत् मानवः प्रयोजनम् उद्दिश्य कार्यं कुर्वन्ति। तेषां पशवानां किमपि लक्ष्यं नास्ति। मनुष्यः स्वभावतः सामाजिको प्राणी अस्ति। सः विवेकशीलः अपि अस्ति। तस्य कानिचित् निर्धारितानि लक्ष्याणि सन्ति। तस्यः एक परिवारः अस्ति। परिवारस्य सुखं प्रमुखं लक्ष्यमस्ति। निजपुत्राणाम् अध्ययनाय परिवारस्य कल्याणाय च सः अहर्निशं प्रयतते। वृद्धजनानां सेवा अपि तस्य परमं कर्तव्यं भवति। मनुष्यजीवनस्य अन्यद् उद्देश्यम् अस्ति समाजसेवा। यस्मिन् समाजे स वसति, तत्समाजस्य समुन्नतिः तस्य प्रमुखं लक्ष्यम्। यदि देशस्य प्रत्येकः नागरिकः समाजसेवायां दृढनिश्चयो भवेत् तर्हि समाजे सर्वेऽपि सुखिनः भवन्ति। देशसेवा अपि मानवजीवनस्य उद्देश्यं खलु। अनेके देशभक्ता; देशरक्षणार्थं स्वप्राणान् अपि अत्यजन्। ते वीरपुरुषाः सर्वेषाम् आदर्शाः सन्ति। अतः मातृभूमि रक्षणं मानवजीवनस्य परमं लक्ष्यम्। स्वयं ज्ञानं गृहीत्वा, विद्यायाः प्रसार अपि मानवजीवनस्य लक्ष्यमस्ति। अस्माकं देशे ग्रामीणविभागे बहवः जनाः निरक्षराः सन्ति। अतः ग्रामेषु विकासः न जातः। ग्रामे ग्रामे साक्षरता प्रसारः अति-आवश्यकः खलु।

लक्ष्यविहीनानां जीवनं पशुवत् भवति। विद्यार्थिभिः तु कदापि लक्ष्यत्यागः न कर्तव्यः। यदि तेषां जीवने लक्ष्यं भवति, तर्हि ते सफलतां प्राप्नुवन्ति। प्रयासेन तेषामुद्देश्यम अवश्यं पूर्णं भवति। यः स्वजीवनं परजीवनं च सुखसमृद्धियितुं प्रयतते, तस्य लक्ष्याणि सफलानि भवन्ति। ये समाजहितार्थं, देशहितार्थं कार्याणि कुर्वन्ति, ते अवश्यं यशस्विनः भवन्ति।

# संस्कृतस्य महत्त्वम्

**महालिङ्गय्यः**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 834

**संस्कृतभाषा**

विद्योतते विशालविश्वेऽस्मिन् सुन्दरसमुनोहरललितमृदुमधुररमणीय- सरलसरसात्यन्ता- व्यक्तानुपमान-सकलकलान्वितज्ञानविज्ञानराशियुतसमस्त- ऋषिमुनिमहर्षिविरचितवेद- वेदाङ्गपुराणे-तिहासशास्त्रोपनिषत्काव्य-सङ्गीतोपवेद- दर्शानाद्यनेकानेक विषययुतजीवनलक्ष्य- सम्पादनोपयुक्तधर्मार्थ-कामसाधनविषयका- त्यन्तालौकानन्द-प्रदायिकमोक्षोपयुक्ता गीर्वाणदेववाणीमानुष्यभिधानसहिता संस्कृतभाषेव। अत एवं निगद्यते संस्कृतं नाम देवीवागन्वाख्याता महर्षिभिः, '**भाषासु मधुरा रम्या दिव्या गीर्वाणभारती**' इतीयं प्राज्ञानामुक्तिः अत्र विद्यमानं प्रत्येकमपि पदं संस्कृतस्य भाषोत्तमत्त्वं प्रतिपादयति न हि केवलं भावाभिव्यक्तिविनिमयमात्रं वा भाषायाः उद्देश्यं भवति तथा सति वाङ्मयं जगदिदं रसपूरितं नाभविष्यत् । जनाः सुखमपि नानुभवन्ति स्म मातुः अपत्योपरि वात्सल्यं, पितुः सुतानामुपरि प्रीतिः पत्युः पत्न्यां प्रेम, प्रियाप्रियकरोः वा प्रणयः न केवलं भावाभिव्यञ्जकया भाषया न प्राकाश्यते। किन्तु मधुरायां भाषायां सत्यामेव मधुरा एव हि भाषा मधुरभावमभिव्यक्तुं समर्थते। अत्यधिकमेतादृशगुणः संस्कृत एव वर्तते । इतरभाषासु विद्यते चेदपि संस्कृतात् संक्रान्ता एव हि ते गुणाः । मातरि विद्यमानाः गुणाः अपत्येष्वपि विद्यत इति कोऽत्र विस्मयः ? नास्त्येव वाक् हि मनोहादकारिणी भवेत्। यस्य वाक् मनोरमा स्यात् स एव लोके सर्वप्रियः भवति । अतः एवोक्तं लक्ष्मीर्वसति जिह्वाग्रे जिह्वाग्रे मित्रबान्धवाः" इति सर्वजनसम्मेलनात्मको गुणः संस्कृत एव परिपूर्णरीत्या वर्तते संस्कृतस्य वेदादिसाहित्यान्येव तत्र कारणभूतानि साक्षिभूतानि तिष्ठन्ति । संस्कृतस्य अत्यन्तं रमणीयत्वादेव समग्रे जगति तस्याः ग्राह्यतानुभूयते । अपि च संस्कृतभाषायाः अयं विशेषः यः सामान्यभाषणे उपयुज्यमानाः शब्दा एवं विशिष्टानुपूर्व्या योजिताः चमत्कृतिं जनयन्ति, छन्दोलयबद्धाः श्लोकाः भवन्ति, काव्यत्वम् आवहन्ति च । अयं संस्कृतस्यैव विशेषः वैभवश्च अत एव जायते पूर्वोक्ताः माधुर्यादिगुणाः स्वाभाविका एवेति ।

# नाट्ये सङ्गीतादीनां प्राधान्यम्

**मञ्जुनाथ गनपति हेगडे**
**शिक्षाशास्त्री द्वितीयवर्षम्, अनु.** 925

नाट्यस्य सङ्गीतवाद्यादिभिः सह घनिष्टः सम्बन्धः वर्तते । तैर्विना दृश्यकाव्यं श्रव्यकाव्यात् कथमपि न विशिष्यते । यतः दृश्यकाव्ये सङीत-वाद्य-दृश्यविधानादीनि काव्यात्मकप्रभाववृद्धौ विशिष्टतया सहायकानि भवन्ति । सङ्गीतवाद्यादीनां वादनेन तैर्निः सृतानां सकारात्मकतरङ्गाणां प्रभावात् सहृदये रजस्तमोगुणयोः अभिभवः सत्त्वगुणस्य चोद्रेकः भवति , यः रसास्वादस्य अनिवार्योंऽशः । तत्र संवादद्वारा वस्तु अग्रे याति । तेन वर्ण्यवस्तुनि सहृदयस्य मनः संलग्नं भवति । परन्तु श्रव्यकाव्ये वर्णनद्वारा वस्तुनः गमनं भवति येन सहृदयस्य मनसि कौतूहलं न जागर्ति, य आनन्दस्य प्रमुखः अंशः भवति ।

नाट्ये गीतवाद्ययोः समायोगान्न कदापि तस्य विनाशो भवतीति नाट्याचार्यस्याभिप्रायः । नाटकस्य शाश्वत प्रतिष्ठायै तत्र गीतवाद्ययोः समन्वयोऽनिवार्यः । वाद्यं तु नाटकस्य शय्येति तेन उद्घोषितम् । तदनुसारेणैव नाटकस्था नर्तक्यः चतुरा नाट्यकुशला ऊहापोहविचक्षणाः रुपयौवनसम्पन्नाश्च भवन्ति स्म । नेत्रकर्णयोरुगपत् प्रियत्वात् हृदयावर्जकत्वाच्च नाटकस्य रमणीयता सर्वस्वीकृताऽस्ति । नाट्यं स्वकीयरमणीयताभूयिष्ठगुणेन भिन्नरुचेर्जनस्य युगपदेव समाराधनाय समर्थमिति **'नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्'** इति **कालिदासोक्तिः** सर्वैरप्यङ्गीकरणीया भवति । भारतीयकलाचिन्तनशास्त्रे नृत्यकलाया अन्तर्भूतस्य अभिनयस्य नाट्यस्य वा सातिशयगर्भं विश्लेषणम् उपलभ्यते । नृत्यवाद्यसङ्गीताभिनयसंवलितत्वमेव नाटकस्य रमणीयः पक्षः ।

# त्रिभाषासूत्रम् संस्कृतञ्च

**चिन्तपल्लि स्वरूपा**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 852

भारतसर्वकारस्यादेशमनुसृत्य कैश्चित् विपश्चिद्भिः त्रिभाषा सूत्रं समर्पितम्। भारतसर्वकारेणापि समर्थितमनुमोदितं च तत् त्रिभाषासूत्रं भारतवर्षस्य सर्वेषु प्रान्तेषु प्रवर्तितम् । त्रिभाषासूत्रस्य (Three language formula) किन्निमित्तं, कोऽत्र हेतुः, किमस्य प्रयोजनञ्च। भारतवर्षे शिक्षाक्रमे भाषाणां पौर्वापर्यम्, उच्चावचत्वं, न्यूनाधिकत्वञ्चाश्रित्य विविधाः विवादाः प्रादुरभुवन्। तद्विवादशान्तये समरूपताऽऽकलनाय च त्रिभाषासूत्रस्य जनिरभूत्। त्रिभाषासूत्रे संस्कृतम् :- त्रिभाषासूत्रं सूक्ष्मेक्षिकाया परीक्ष्यते विविच्यतेचेत् संस्कृतभाषा भर्तृविरहिता नारीव, पुत्रादिपरित्यक्ता मातेव, निर्वसना, अवधूता, अवहेलितेव संदृश्यते । न भारतीयानामध्येनृणां तादृशं श्रमाभिमुखत्वं विविधभाषाज्ञानाभिरुचित्वं च येन भाषाध्ययनानन्तरं तुरीयभाषाध्ययनं सम्भाव्येत् । यद्यपि विदेशेषु सन्ति तादृशाः प्रदेशाः जर्मनी- फ्रांस-स्विट्जरलैण्डप्रभृतयः यत्र भाषात्रयं भाषाचतुष्टयं वा सामान्यजनैरपि अधीयते। शिक्ष्यते, व्यवह्रियते च । परं न भारते वर्षे तादृशी भाषा - जिज्ञासा, अभिरुचिश्च । अतः कृतेऽपि प्रयत्ने भारते चतुर्थभाषाध्ययनं सर्वथोपेक्ष्यते। येषां प्रदेशानां न प्रान्तीया भाषा हिन्दी - भाषा, ते स्वप्रान्तीयभाषाध्ययने प्रवर्तन्ते। अन्ताराष्ट्रियभाषारूपेन सत्यपि- जर्मन-फ्रेंच-रूसी- भाषाणां सङ्ग्रहे आङ्ग्लभाषैव सर्वकारस्थाभिप्रेता, समर्थिता, प्रचारिता च। राष्ट्रभाषारूपेण हिन्दी भाषाध्ययनं तेषां कृते अनिवार्यम्। एवम् अहिन्दीभाषिषु प्रान्तेषु संस्कृतस्य शिक्षाक्रमे स्थापनमध्यापनं च दुष्करमिव प्रतीयते। हिन्दीभाषिषु प्रदेशेषु राष्ट्रभाषा हिन्दी द्वितीयभाषारूपेण पाठ्यते। तृतीयभाषारूपेण दाक्षिणात्यभाषा, संस्कृतभाषा वा वैकल्पिकरुपेण स्वीक्रियते। यत्र कुत्रापि दाक्षिणात्यभाषाध्ययने दुराग्रहो निधीयते तत्र ग्रीर्वाणवाण्याः कृते प्रवेशो निषिद्ध एवावगन्तव्यः। कियन्तः सन्ति तादृशाः संस्कृतानुरागिणो ये धर्मभावनया कर्तव्यबुद्ध्या तत्वार्थज्ञानाभिगमाय वा संस्कृतभाषाध्ययने प्रवृत्ताः। एवं सुकरमेतद् वक्तुं यत् त्रिभाषासूत्रं संस्कृतभाषाध्ययने प्रत्यवायरूपमेव न तु साधकम् । त्रिभासूत्रेणानेन आङ्ग्लभाषाप्रचारे महत्साहाय्यमदाचि इति निर्विवादम् । राष्ट्रभाषायाः कृते प्रान्तीयभाषाणां च कृते, मार्गाः प्रशस्यते, परं संस्कृतस्य कृते मार्गाविरोध एवाविर्भाव्यते ।

# धर्मदृष्टिः

**मृत्युञ्जय पण्डा**
**शिक्षाशास्त्री द्वितीयवर्षम्, अनु.** 917

श्रीरामस्य रावणस्य च युद्धं जातम् । रावणः भयङ्करं युद्धं कृतवान् । तदा श्रीरामः ब्रह्मास्त्रं प्रयुक्तवान् । ब्रह्मास्त्रेण रावणः मृतः । अनन्तर विभीषणः अतीव रोदनं कृतवान् । मन्दोदरी अपि रोदनं कृतवती । श्रीरामः विभीषणम् उक्तवान्- "विभीषण ! रोदनं मास्तु । रावणः वीरस्वर्गं प्राप्तवान् । इदानीं शवसंस्कारस्य समयः । तदर्थं सिद्धतां करोतु" इति । तत् श्रुत्वा विभीषणः अवदत् "भगवन् रावणः पापी, अधार्मिकः, परस्त्रीकामुकः, दुष्टः च । अतः रावणस्य शवसंस्कार न करोमि" इति ।

"विभीषण! मरणान्तराणि वैराणि । अर्थात् मरणपर्यन्तम् एवं वैरं तिष्ठति । मरणानन्तरं वैरम् अनुचितं धर्मविरुद्धं च । इदानीं रावणः मृतः । तस्य सर्वे पुत्राः अपि मृताः । कुम्भकर्णः अपि मृतः । अतः रावणस्य, शवसंस्कारः भवता एवं करणीयः" इति उक्तवान् रामः । विभीषणः- भगवन् ! तथापि रावणः पापी .......। "विभीषण! मरणान्तराणि वैराणि । अतः मम अपि रावणस्य विषये वैरं नास्ति । रावणः भवतः यथा सहोदरः तथा ममापि यदि शवसंस्कारं भवान् न करोति तर्हि अहम् एव करोमि" इति गम्भीरस्वरेण उक्तवान् रामः । "क्षम्यताम् अहं शवसंस्कारं करोमि । भगवन्! भवतः धर्मदृष्टि असाधारणी" इति वदन् श्रीरामं नमस्कृतवान् विभीषणः ।

# विवाहः

**अर्पिता मिश्रः**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु.** 918

मानवजीवनस्य सम्पूर्णजीवनं संस्कारक्षेत्रं भवति, सम् उपसर्गात् कृ धातोः घञ् प्रत्यये सुडागमे च कृते संस्कारः शब्दः निष्पद्यते । स च संस्कारः शब्दः संस्कार-परिष्करण-शुद्धि-भूषण-शोभा-शिक्षण-प्रशिक्षण संस्कृति-शुद्धिक्रिया-स्मरणशक्ति-धार्मिकविधिविधालेषु बहुषु अर्थेषु प्रयुक्तः दृश्यते। मनुष्याः जन्मतः आरभ्य मरणं यावत् संस्काराः अनुष्ठीयते । अतः मनुष्यस्य समग्रजीवनमभिव्याप्य संस्काराः प्रवर्तिताः भवन्ति। वैदिककालादारभ्य संस्काराणामुख्य सदुभ्यते । वेदस्य कर्मकाण्डविभागे संस्काराः उल्लिखिताः सन्ति । संस्कारेण आत्मगुणस्य विकाराः भवन्ति । प्रत्येकस्य द्रव्यस्य शुद्धिनिमित्तं यत् कर्म क्रियते तत् संस्कारः नाम्ना अभिधीयते । संस्कारः मनुष्यशरीरं पवित्रं करोति। संस्कारः मनुष्यस्य मार्गदर्शनस्य कार्यं करोति एवं तस्य माध्यमेन चरित्रनिर्माणमपि भवति । संस्कारेणैव शिशोः मानवतायाः प्रथमोदबोधः भवति । गर्भाधानादारभ्य मृत्युपर्यन्तं षोडशसंस्कारः व्यासेन स्वीक्रियते । षोडश संस्कारेषु विवाहसंस्कारः अन्यतमः एवं तस्य सर्वाधिकं महत्त्वं विद्यते ।

**गर्भाधानमृतौ पुंसः सवनं स्पन्दनां पूरा,**
**षष्ठोऽष्टमे वा सीमन्तो मास्यते जातकर्म ।**
**अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः,**
**षष्ठेऽभप्राशन मासि चूडा कार्या यथाकुलम् ॥**

ब्रह्मचर्यपालनान्तरं गुरवे दक्षिणांदत्वा स्नातकगृहस्थाश्रमे प्रविशति । संप्रति गृहस्थधर्मः उच्यते। गृहस्य मधुरता स्नेहमयवातावरणस्य तथा पत्न्या साकं वैवाहिकप्रेममयजीवनस्य फलस्वरूपं सन्तानजननं तस्य पाललं पोषणं च मानवस्य कर्तव्यं स्मृतिकरणे सर्वेषामाश्रमवासिनां मध्ये गृहस्थाश्रमिणः श्रेष्ठतां प्रतिपादिताः यथाः-

**यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्वं आश्रमाः ॥**

हिन्दूधर्मे विवाहः श्रेष्ठः सर्वाधिकः महत्त्वपूर्णश्च भवति। विवाह शब्दो वह प्रायणे इति धातोः भावो घञ् कृतोः वाहो विवाहः इति व्युत्पया निष्पद्यते । रतिपुत्रधर्मार्थतेन विवाह त्रिविधयः पुत्रार्थे द्विविधः नित्यकाम्यश्च अपुत्रस्ययसुतार्थं विवाहः सनित्यः, एकस्मिन् पुत्रेजाते बहुमूत्रोत्पादनार्थं यो

विवाहः सकाम्यः । यथा - पुत्रार्थेक्रियते भार्या पुत्रपिण्डस्यकारणम् । विवाहप्रकारा:- अष्टौ विवाहाः भवन्ति। यथा –

**ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसूरः ।**

**गान्धर्वोराक्षसश्चैव पैशाच श्चाष्टमोऽधमः ॥**

अर्थात्- ब्राह्म दैवः, आर्षः प्रजापत्यः, आसुरो, गान्धर्वो, राक्षसः, पैशाचश्च इति।

## आदर्शोऽध्यापकः

**अंशुमान नन्दः**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु.** 920

शिक्षाविहीनो मानवसमाजो यथा पासादृश्यं भजते तथैव शिक्षापि विनाध्यापकमस्तित्वविहीना । वेदादेशानुसारमध्ययनं तपः अध्येता तपस्वी, अध्यापकश्च द्वयोः जीवनाधायकं तत्वम् अस्माकं शास्त्रेषु शिक्षकोऽध्यापको वा गुरुशब्देन व्यवहृतः । लोकस्य कस्यापि कार्यस्य कृते गुरुरपेक्षितो भवति गुरू विना स्वतः सम्पाद्यमानस्य कर्मणः परिणतिः सन्तोषावहा फलप्रदा च नैव दृश्यते । एतादृशी गुरुपरम्परा प्रवाहप्राबल्यात् युगप्रभावाच्चाद्यावधि अध्यापकपदार्थे समाविष्टा । साम्प्रतम् अध्यापकशब्दः केवलं विद्यालयेषु सवेतनमध्यापने रूढो जातः। प्रथमकक्षातोऽन्तिमकक्षापर्यन्तं विविधानां वेदव्याकरणदर्शनप्रभृतीनां विषयाणां शिक्षणं कुर्वाणा विषयविशेषज्ञाः सन्त्यध्यापकपदभाजः किमपि परिवर्तनमवाप्यापि स्वगरिमाणं तद्वदेव विभर्ति शब्दोऽय मध्यापकः । प्रायः द्विविधो गुरुः शास्त्रेषु निर्दिष्टः शिक्षागुरुः दीक्षागुरुश्च। वसिष्ठो यदि रामस्य दीक्षागुरुरासीत् तर्हि विश्वामित्रः शिक्षागुरुः । रामस्य हृदि द्वावपि प्रति समाना श्रद्धा श्रूयते । शिक्षकस्य शिक्षाऋणं जीवनं यावत् तिष्ठति । संसारस्य किञ्चिदपि वस्तु प्रदाय तदनृणत्वं लब्धं नैव शक्यम् यथोक्तम्-

**एकमेवाक्षरं वस्तु गुरुः शिष्यं प्रबोधयेत् ।**
**पृथिव्यां नास्ति तदद्रव्यं यद दत्वा चानृणी भवेत् ।।**

एवमस्ति महत्वं शिक्षकगुरुणाम् परन्त्वेतादृशीस्वपि गुरूपरम्परासु भेदकारकोऽयमादर्शशब्दो विचारणीयः। अत्र प्रजातन्त्र शासनशासिते स्वदेशे कोऽपि मानशिक्षामवाप्य स्वयोग्यतादिबलेनाध्यापकपदं प्राप्तुं समर्थो भवति । स विद्यालयेषु विषयानपि पाठयति वेतनमपि लभते तेनाधिगताः छात्राः परीक्षामपि प्रथमादिश्रेणीषु समुतीर्णा भवन्ति । परन्तु सः सर्वयाऽदर्शाध्यापकोऽस्ति न वेति चिन्तनीयः । आदर्शाच्यापकस्य कृते बहवो गुणा अपेक्षन्ते। तत्रादावाचरणम् उक्तं च शिक्षकस्याचरणसम्बन्धे मनुस्मृती-

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्र शिक्षेरन् पृथिव्यां सर्वमानवाः ।।**

चरित्रवान् शिक्षक एवास्ति अग्रजन्मा, न हि ब्राह्मणवंशोद्भवः कश्चिदन्यः । अध्यापकस्य बाह्याभ्यन्तरचोभयं व्यक्तित्वमध्यापनकाले साहाय्यमाचरति शिक्षार्थिभिचानुक्रियते। बाह्यव्यक्तिवेषभूषा, गमनादिविधिः वार्त्तालापः, व्यवहाराः, व्यसनादिकञ्च संगृह्यन्ते।

आर्दशाध्यापकस्य शरीरे विमलो वेषः स्यात् उत्तेजको रागादिसम्बर्धको वेषः सर्वथा त्याज्यः। बहुमूल्यानामलङ्काराणां काचिदावश्यकता नैव भवति तत्कृते । अलङ्काराः अध्यापक नैव विभूषन्त्यपि तु कामुकतादिदुर्गुणानुत्पाद्य तमधुरीकुर्वन्ति । प्रायः शिक्षकः सामान्यजीवनयापनशीलः उत्तमविचारवांश्च भवेत् । ताम्बूलतमालपत्रादीनां सेवनेनाध्यापकस्य व्यक्तित्वं स्वास्थ्यन्वापि क्षीयते। आदर्शाध्यापकास्य समुज्वलबाह्य स्वमेव सच्छात्रान् विद्यामध्येतु समाकर्षति । आन्तरव्यक्तित्वं भोजनेन, आचारविचारेण, व्यवहारेण, वाक्पाटुवेन, ज्ञानगाम्भीर्येण, अध्यापनकौशलेन च सम्मिल्य निर्मितं भवति । भोजनं सर्वथा सात्विकं, पौष्टिक सुरुचिसम्पन्नं च स्याद्, येन मननं, चिन्तनं, ज्ञानं च वर्धमानानि स्युः । राजसेन तामसेव वा भोजनेन स्वादस्तु प्राप्यते परन्त्वादर्शत्वं हीयते ।

**यद्यदाचरति श्रेष्ठस्तत् तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।।**

# सैषा जन्मभूमिरहो

## (मूलकविता ओडिआभाषायाम्)

**सौभाग्यारञ्जनः**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 803

यस्मिन् देशे जन्म मम यस्य च क्रोडे क्रीडाम्यहम्।
जननीव यः पालयति सैषा जन्मभूमिरहो ! ।। १ ।।
गहनवनं श्यामलतरुः लतावल्लरिः शोशुभीति ।
शाखाभ्यः शाखा विहङ्गमो डयमानोऽयं मोहयति।। २ ।।
नक्षत्रेषु नभसि मुदा किरति ज्योत्स्नाम् इन्दुरयम्।
विकसन्ति कुसुमानि सदा हसन्ति वक्षसि बहुलमहो ! ।। ३ ।।
सागरे नीला तरङ्गमाला नृत्यन्ती क्षालयति पदम् ।
क्रीडन्ती सा निर्झरिणी विशति देहं सामोदम्।। ४ ।।
तस्मिन् देशे पल्लिपुरे नैजोऽपरो नो भवति ।
हासं हासं क्रीडाम्यहं भ्राता भगिनी सर्वे मम ।।५ ।।
देशस्यास्य सुखं भवेत् तदीया सेवा धर्मैरिह ।
नैजं सर्वं प्रदाय भोः! तस्य कीर्त्तिं वितन्महे ।। ६ ।।
स एव जीवननिर्माता स्नेहेन तस्य जीवाम्यहम् ।
न किञ्चिज्ज्यायः कदापीह सैषा जन्मभूमिरहो! ।। ७ ।।

# भाषाशिक्षणम्

**देबब्रत साहु**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 810

संसारेऽस्मिन् भाषाशिक्षणं पुरातनं वर्तते। तत्र औपचारिकी, अनौपचारिकी, यादृच्छिकी इति त्रिसृभिः शिक्षाभिः जायमानं वर्तते। भाषामन्तरेण मनुष्यः सर्वथा निष्क्रियः पद्म इव भवति । भाषाऽखिलमानवस्य सर्वाङ्गीणविकासाय कल्पते। भाषया एव मानवः नित्यनूतनं ज्ञानं ददाति, अधिगच्छति च अतः सभ्यतायाः विकासे भाषायाः महत्त्वं सर्वत्र वरीवर्ति यस्मिन् देशे भाषासमृद्धा विकसिता भवति तत्रत्याः जनाः अपि समृद्धाः विकसिताश्च भवन्ति। भाषासमृद्धिः जनानां समृद्धेः सूचिका या च भाषा परिष्कृता, परिमार्जिता, सरला, मधुरा, समर्था, बोधगम्या भवति सा लोके आद्रियते चिरकालं यावत् सैव भाषा राराज्यते, यस्याः भाषायाः योगदानं विज्ञानस्य, समाजस्य विकासे भवति यया जनाः उपकृताः भवन्ति अखिलेऽस्मिन् जगति तस्याः एवं भाषायाः महत्त्वं प्रसारश्च भवति। शब्दो हि भाषणार्थकाद् भाष व्यक्तायां वाचि इत्यस्माद्धातोः निष्पन्नः भाषा नाम परस्परं विचारभावनानुभावानां विनिमयार्थमन्योऽन्यप्रयोजन- सम्पादनायोपयुज्यमानं प्रभावि साधनमेव व्यक्तवाग्रूपा भाषैव भावाभिव्यक्तौ समर्थ भवतीति उररीकुर्वाणाः शाब्दिकाः भाषेति पदमित्थं व्याचक्रुः "भाष्यते व्यक्तरूपेण किञ्चिन्मनोगतमभिव्यज्यते" इति। का नु खलु व्यक्तवागसौ इत्याकांक्षायामुच्यते व्यक्ताः वर्णाः यस्यां वाचि सा व्यक्तवाग्भाषेति अस्यां सर्वे वर्णाः व्यक्ताः स्पष्टाः भवन्तीति । अर्थात् व्यक्तवाग्रूपेण यस्याः अभिव्यक्तिः क्रियते सा भाषेति कथ्यते। अथ सा **"भाषणाद्धि भाषा"** इत्यपि कथ्यते ।

# संस्कृतशिक्षणविधय:

## (Methods of Teaching Sanskrit)

**कृष्णप्रसाद् मिश्रः**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 807

समानम् उन्नेतुं शिक्षायाः आवश्यकम् अस्ति। एवं तंत्रशिक्षायां आदि अध्ययनम् अध्यापनयो: प्रमुखायोः उपादेयता वर्तते इति अङ्गीकार्यं विना समाजस्य प्रगतिः न सम्भवति छात्राणां कृते अध्ययनं कष्टसाध्यम्, अध्यापनम् अपि शिक्षकाणां कृते विविच्यमान विषय:- मानवा: स्वयं माध्यमेन सर्वं प्रकाशकानि, स्वोमनोभावां च सचेतसः अन्यत्र प्रेषयितुं सम्भवन्ति सा प्रक्रिया संप्रेषणम् इति, शिक्षाविदः निरुपयन्ति। भाषाशिक्षणं पूर्वं अपि बहु आवश्यकता अस्ति। इदानीम् अपि अस्ति, पुनः भविष्यते अपि भविष्यति शिक्षणस्य बहु विधयः सति येन माध्यमेन अध्यापनं कार्यं सरलोकतुं संभवति संस्कृत भाषायाम् अयं विविधशिक्षणविषयः सन्तिः । आरभ्य कार्यं पूत्पर्यं क्रमबद्धयोजना अपेक्षते । योजना सफला तर्हि कार्यं अपि सफलम् भविष्यति। शिक्षणं योजनया एवं विधिना, प्रणाली-पद्धतिः, इत्यादि माध्यमेन शफला भवति । वैदिक कालात् आरभ्य संस्कृतशिक्षणस्य काचित पद्धतिः गुरुकुले वर्तते स्म। तत्र कण्वस्योकरणस्य प्राधान्यत्वात् शिक्षणं मार्मिक विधेः प्राधान्यता अस्ति। एवं परिवर्तितेषु कालेषु विभिन्न शिक्षणविषयः समागताः। संस्कृतशिक्षणविधयः त्रिषु भागेषु विभक्तुं शक्यते-

1. **प्राचीनविधिना संस्कृतशिक्षणविधयः**
2. परम्परागतविधि:
3. प्रत्यक्षविधिः
4. प्रत्यक्षविधिः
5. खण्डान्वयविधिः
6. दण्डान्वय विधिः
7. व्याख्यानविधिः
8. अभिनयविधिः

**2- नवीनविधिना संस्कृतशिक्षणविधयः**

1- आगमनविधिः

2- निगमनविधः

3- ह्यूरिस्टिक विविध

4- टीका' विधिःक्रीडा विधिः

5- अनुवाद् विवि: टीका विधि:

6- परियोजना विधि व्याकरण अनुवादविधिः

7- निरीक्षण विधिः

# भारते धर्मनिरपेक्षता

**सनत कुमार त्रिपाठी**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु. 849**

धर्मनिरपेक्षतायाः शाब्दिकार्थः भवति धर्मं प्रति तटस्थता अर्थात्, धर्मविषये हस्तक्षेपम् अकृत्वा, व्यक्त्यै वा समुदायाय वा विश्वासानुसारं धर्मानुसारं वा बाध्यतां विना व्यवहर्तुं स्वतन्त्रताप्रदानमेव धर्मनिरपेक्षता । लोके बहवः धर्मान् प्रत्ययान् च अनुवर्तयन्तः जनाः सन्ति, परन्तु सर्वेषां सारः समानमेव । परन्तु धर्मस्य उत्पत्तिम् अवगन्तुं तत्स्थाने वयम् ईश्वरं विभक्तवन्तः । परन्तु किं वयं दैव्यं विभजामः ?

भारतस्य संविधानसभाद्वारा भारतं धर्मनिरपेक्षराष्ट्रं घोषितम्, अस्य अर्थः अस्ति यत् राष्ट्रस्य धर्मः नास्ति तथा च प्रत्येकस्य नागरिकस्य इच्छानुसारं कस्यापि धर्मस्य अनुसरणं प्रचारं च कर्तुं पूर्णतया स्वतन्त्रता वर्तते । अनुच्छेद २५ अनुसारेण भारतस्य सर्वेषां नागरिकानां कस्यापि धर्मस्य अनुसरणे स्वतन्त्रता अस्ति ।

**प्रस्तावनायां धर्मनिरपेक्षशब्दस्य प्रयोगः**

'१९७६' तमे वर्षे भारतीयसंविधानस्य प्रस्तावनायाः '४२' तमेन संशोधनेन भारतं स्पष्टतया धर्मनिरपेक्षराष्ट्रमिति घोषितमस्ति । धर्मं राष्ट्रात् पृथक् स्थापयितुम् एषा अवधारणा एव धर्मनिरपेक्षता इति उच्यते ।

**धर्मनिरपेक्ष समाजस्य कृते अत्यावश्यकगुणाः**

1. भिन्नधर्मावलम्बिजनानां मध्ये कोऽपि भेदः न भवेत् ।
2. कस्यापि एकस्य धार्मिकसमुदायान्तर्गतसर्वेषां वर्गानां समूहानां च स्वतन्त्रतायाः समानतायाः च अधिकारः समानरूपेण ग्रहीतव्यः ।
3. नास्तिकानां जीवितुं प्रगतेः च समानाः अवसराः सन्ति । यावन्तः अधिकाराः स्युः यस्य कस्यचित् धर्मस्य अनुगामिनाम् ।
4. धर्मः व्यक्तेः जीवने एकः व्यक्तिगतविषयोऽस्ति । हिन्दुधर्मम्, इस्लामधर्मम्, ईसाईधर्मं च व्यक्तिगतविषयं मन्यन्ताम् । सर्वत्र धर्मविषयेषु सार्वजनिकविमर्शः न भवेत्, न च तस्मिन् राजनैतिकप्रवेशः ।

आश्चर्यं यत् प्रत्येकस्य धर्मस्य ईश्वरः अस्मभ्यं प्रेम्णः करुणायाः च सन्देशं ददाति, परन्तु वयं प्रेम विस्मृत्य युद्धाय सज्जाः स्मः, धर्मः अस्मान् प्रेम शिक्षयति, परन्तु वयं धर्मस्य नामधेयेन शस्त्राणि गृह्णीमः । अद्यत्वे जगत् धर्मैः परिपूर्णमस्ति, परन्तु मानवाः अद्यापि दुःखेन जीवन्तः सन्ति । धर्मस्य उत्पत्तिं नावगत्य धर्माः विभक्ताः भवन्ति , जनाः विभक्ताः भवन्ति , विश्वासः,ईश्वरः अपि विभक्तौ भवतः । येन धर्मस्य समुचितं तत्वं ज्ञायते, तेन मानवत्वं प्रेममार्गं प्रति नेष्यते, न तु संघर्षं प्रति ।

# स्त्रीशिक्षायाः महत्त्वम्

**सोम्य रञ्जन शतपथीः**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 850

संसारे स्त्रीशिक्षायाः स्थानं महत्वपूर्ण वर्तते यदि स्त्रीयः शिक्षिताः भविष्यन्ति चेत देशः अपि शिक्षितः भविष्यति । स्त्रियः एवं अस्माकं संसारे मातृशक्तिरुपेण पूज्यन्ते ।

शैशवावस्थायां पाठस्य शिशुनां यत्नादिकम्, अभ्यागतानाम् अतिथीनां च सपरिवारस्य भार: गृहपत्नीरुपायाः स्त्रीयः उपरि एव आपतति, अतः एतादृशानां कार्यभाराणां उत्तरदायित्वं बहनकर्तुम् एव स्त्रीयः समर्थाः भवितुं अर्हति। अतः एतत् सर्वविधकार्यं सुचारुरूपेण निर्वहणार्थं तासामपि शिक्षणम्, अत्यावश्यकम् अनिवार्यञ्च विद्यते।

परन्तु समाजे केचन जनाः नारी शिक्षायाः विरोधिनः भवन्ति । तेषां मतानुसारेण समाजस्य, धर्मस्य संस्कृते: च विनाशः भवति । शिक्षां गृहित्वा नार्यः, निरङ्कुशाः जायन्ते । अनेन समाजस्य नैतिकमूल्यानि अधोगतिं प्राप्नुवन्ति । समाजस्य विकासाय स्त्रीणां शिक्षणं नितान्तमावश्यको वर्तते । स्त्रीयः पुरुषाः समाजस्य द्वे चक्रे स्तः द्वयो: चक्रयो: दृतायामेव समाजरूपकस्य शकटस्य चालनं सुचारुरूपेण भवितुं शक्नोति । एतयोः चक्रयो: दृढता मुख्यरुपेण शिक्षामाश्रिता । शिक्षिता स्त्री गृहस्य संचालनम् अधिकं दक्षतया कुर्वन्ति । धनस्य सदुपयोगं सा सुष्टुं कर्त्तुं जानाति। अधुना नारी शशक्तिकरणयोजना सर्वकारपक्षतः भवति शास्त्रेषु अपि लिखितं वर्तते।

**"यत्र नार्यस्तुपूज्यन्ते रमन्ते तत्र देवताः ।**
**यत्रैतास्तु न पुज्यन्ते सर्वास्तवाफला क्रिया।।**

# लक्षणामूलध्वनिः

**श्रीदत्त सुब्राय भटः**
**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 823

काव्यमार्गे अभिधा लक्षणा व्यञ्जना चेति वृत्तित्रयमङ्गीक्रियते । तदनुरोधेन अर्थोऽपि वाच्यः, लक्ष्यः, व्यङ्ग्यश्चेति त्रिविधो भवति । एवमर्थस्य त्रैविध्येऽपि लक्ष्यस्य वाच्यात अतिरिक्ततया परिगणनाभावात् काव्यप्रपञ्चे प्राधान्येन वाच्यः व्यङ्ग्यश्चेति द्वावेव अर्थौ गृह्येते । तत्र व्यङ्ग्यार्थस्य प्राधान्ये चमत्कारकारित्वे च सति ध्वनिकाव्यमिति व्यवहारः । सोऽयं काव्यप्रभेदः जगन्नाथेन उत्तमोत्तमकाव्यनाम्ना प्रत्यपादि । उक्तं च तत्स्वरूपं "**शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्** " इति । ध्वन्यते इति व्युत्पत्त्या तादृशः प्रधानः चमत्कारकारी व्यङ्ग्यार्थोऽपि ध्वनिर्भवति । स च ध्वनिः द्विविधः लक्षणामूलः अभिधामूलश्चेति । तत्राद्यः लक्षणामूलः जहत्स्वार्थमूलकः अजहत्स्वार्धमूलकश्चेति द्विविधः । अभिधामूलोऽपि द्विविधः असंलक्ष्यक्रमब्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति । तत्र असंलक्ष्यक्रमव्यङ्ग्यः रसभावादिरूपः अष्टविधः । संलक्ष्यक्रमव्यङ्ग्यस्तावत् शब्दशक्तिमूलः अर्थशक्तिमूलः इति प्राधान्येन द्विविधः । उभयशक्तिमूल इति प्रभेदान्तरपरिगणने त्रिविधः । एवं बहुधा परिगणितेषु ध्वनिप्रभेदेषु लक्षणामूलध्वनिमाश्रित्य यथामति प्रस्तोतुं प्रयते ।

लक्षणा मूलं यस्य स ध्वनिर्भवति लक्षणामूलध्वनिः । लक्ष दर्शनाङ्कनयोः इति धातोः णिजन्तात् ण्यासश्रन्थों युच् इत्यनेन करणार्थे युच्प्रत्यये स्त्रीत्वे टापि च सति लक्षणेति शब्दः निष्पद्यते । मुख्यार्थवाधे सति रूढेः प्रयोजना मुख्यार्थसम्बद्धः अन्यः अर्थः येन प्रतिपाद्यते स लक्षणा इत्युच्यते । स च पदार्थः सम्बन्धविशेषः इत्येवं मन्यमानः जगन्नाथः शक्यसम्बन्धो लक्षणा इत्याह लक्षणास्वरूपम् । शक्यों नाम मुख्यार्थः । मुख्यार्थस्य लक्ष्यार्थेन सह यः सम्बन्धः सामीप्यसंयोगविरोधसादृश्यादिः स एव लक्षणा इत्युच्यते इत्यर्थः । इयं च लक्षणा निरूढा प्रयोजनवती चेति द्विविधा । रूढिर्नाम अनादिवृद्धव्यवहारः , तमाश्रिता लक्षणा निरूढा इत्युच्यते । प्रयोजनं च फलं , तद्युक्ता लक्षणा प्रयोजनवाती इत्यभिधीयते । प्रयोजनं चात्र व्यञ्जनावृत्तिवेद्यम् । प्रयोजनवती तावत् सम्बन्धस्य सादृश्यरूपत्वे गौणी इति तदितरसम्बन्धरूपत्वे शुद्धा चेति विभज्यते । तयोरन्यतरा शुद्धा तु जहत्स्वार्था अजहत्स्वार्था सारोपा साध्यवसाना चेति चतुर्विधा । अद्य अत्र प्रस्तुतोऽयं लक्षणामूलध्वनिरिति विषयः जहत्स्वार्थाम् अजहत्स्वार्थी च लक्षणामाश्रित्य तिष्ठति ।

मुख्यार्थबाधे सति स्वीकृतस्य लक्ष्यार्धस्य समभिव्याहृतपदार्थेन अन्वये सिद्धे मुख्यार्थस्य अन्वयः यदि न सिध्यति तर्हि सा जहत्स्वार्थी लक्षणा इत्युच्यते मुख्यार्थस्य परित्यागात् । भेदोऽयं

लक्षणलक्षणा इत्यपि व्यपदिश्यते । तत्र प्रतीयमानोऽर्थः जहवर्थलक्षणामूलको ध्वनिरित्युच्यते । तद्यथा

**कृतं त्वयोन्नतं कृत्यमार्जितं चामलं यशः ।**

**यावज्जीवं सखे तुभ्यं दास्यामो विपुलाशिषः ॥ इति ॥**

इदं च कृतापकारं दुर्जनं प्रति कस्यचन पुरुषस्य वचनम् । अन्त्र उन्नतकृत्यादयः पदार्थाः अपकारिणि पुरुषे बाधिताः विरुद्धे हीनकृत्याद्यर्थान्तरे परिणमन्ति । अयं च लक्ष्यार्थः । उन्नतकृत्यादीनां मुख्यार्थानां सर्वात्मना परित्यागात् लक्षणेयं जहत्स्वार्था इत्युच्यते । ततश्च त्वया अपकारे कृतेऽपि यः मधुरमेव भाषते तस्मिन् मवि त्वया कृतमिदमपकृत्यं तव पापिष्ठत्वं च वर्णोयितुमशक्यमिति विवक्षितोऽर्थः व्यञ्जनया प्रतीयते । अयमेवात्र जहत्स्वार्थमूलध्वनिपदेनोच्यते ।

यत्र बाधितो मुख्यार्थः समभिव्याहृतपदार्थेन सह अन्वयं प्राप्तुम् अर्थान्तरं लक्षणया स्वीकरोति स्वार्थं च न त्यजति तत्र लक्षणा अजहत्स्वार्था इत्युच्यते । अस्या एव उपादानलक्षणा इति नामान्तरम् । तत्र प्रतीयमानोऽर्थः अजहत्स्वार्थलक्षणामूलः । तद्यथा बधान द्रागेव द्रढिमरमणीयं परिकरं किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः । न कुर्यास्त्वं हेलामितरजनसाधारणधिया जगन्नाथस्यायं सुरधुनि समुद्धरणसमयः ॥ इति

अत्र जगन्नाथपदेन जगन्नाथत्वविशिष्टः कश्चन पुरुषो बोध्यते । तस्मिन् समुद्धरणयोग्यत्वस्य अप्रतीतौ मुख्यार्थः अनुपपन्नो भवति । ततश्च लक्षणया अनेकपापकर्तृत्वरूपधर्मविशिष्टतया स एव बोध्यते इति तस्य अजहत्स्वार्थत्वम् । तत्कृतानां पापानां पदार्थान्तरेण प्रतिपादनं न शक्यमिति पापातिशयरूपोऽर्थः व्यङ्ग्यः । तस्य प्राधान्येन विवक्षितत्वात् चमत्कारहेतुत्वाच्च ध्वनिपदवाच्यः अजहत्स्वार्थलक्षणामूलश्च ।

प्रयोजनवत्याः लक्षणायाः इतोऽप्यन्ये चत्वारः प्रभेदाः सन्ति, ये तावत् गौणी सारोपा, गौणी साध्यवसाना, शुद्धा सारोपा, शुद्धा साध्यवसाना चेति । तत्रापि प्रयोजनस्य व्यङ्ग्यत्वम् अस्त्येव । तथापि तेषु प्रभेदेषु प्रतीयमानस्य तस्य न प्राधान्यमिति ते प्रभेदाः रूपकरूपकातिशयोक्तिहेत्वाद्यलङ्कारतया परिगण्यन्ते इति शम् ।

# शिक्षकाणां प्रशिक्षणं किमर्थम्

**सुजितशीलः**

**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 846

प्रशिक्षणम् आँग्लभाषायां 'Training' इति उच्यते। प्रशिक्षणं तादृशी प्रक्रिया वर्तते यया प्रक्रियया कस्यचित् विशिष्ठकार्यस्य कृते कुशलतापूर्वकं सज्जं भवति । तस्य ज्ञानं कौशलं च वर्धयितुं प्रशिक्ष्यते । अध्यापनं महत् कार्यं येन सः शिक्षकः इत्युच्यते । वयं शिक्षकाणां व्यवहारे शिष्टाचारस्य उदारतायाः शुद्धमानवतायाश्च प्रमाणं प्राप्नुमः। यच्छात्राणां हृदि कुसंस्काररहितसमाजस्य बीजानि रोपयति । सर्वे शिक्षकाः तु पाठ्यन्ति परन्तु सर्वे उत्तमाः शिक्षकाः भवितुं नार्हन्ति । अतः उत्तमाः शिक्षकाः भवितुं प्रशिक्षणम् अत्यावश्यकम् । एका प्रचलिता कथा वर्तन्ते-

**अर्थकस्य प्रभावेण शिला भवति शङ्करः ।**

**शिक्षकस्य प्रभावेण बालः भवति सुनागरः ॥**

शिक्षकस्य प्रशिक्षणं किमर्थम् इति काचित् विन्दुं स्वीकृत्य वक्तुम् इच्छामि-

1. सरलतया पाठनं छात्राणां कस्यचित् विषयस्य अवगमनार्थं विषयस्य सरलीकरणम् अत्यावश्यकम् । तथैव भाषायाः सरलीकरणमपि आवश्यकमस्ति । कथं सरलतया पाठनीयं कथं सरलतया च बोधनीयं तदर्थं प्रशिक्षणम् आवश्यकम् ।
2. व्यक्तित्वगुणं, नेतृत्वगुणं च वर्धयितुम्- छात्रा: शिक्षकान् आदर्शपुरुषान् मन्यन्ते । बहवः छात्राः शिक्षकाणां व्यक्तित्वमनुकुर्वन्ति । अतः शिक्षकेषु व्यक्तित्वं नवीनशक्ति, नेतृत्वगुणं च प्रवर्तयितुं प्रशिक्षणम् आवश्यकम्।
3. पाठनकौशले पाठनकौशलस्य विकासार्थं शिक्षकाणां प्रशिक्षणम् आवश्यकम् ।
4. वाक्यप्रयोगः क्लिष्टपदानां विषये ज्ञानप्राप्त्यर्थ प्रशिक्षणम् आवश्यकम् । प्रशिक्षणं विना अध्यापकाः यदि भवन्ति, तदानीं तेन क्रियमाणम् अध्यापनं तथा प्रभावपूर्णं न भवति यथा अपेक्षते। अतः प्रशिक्षणम् आवश्यकम् । शिक्षकः आदर्शसमाजनिर्माणस्य यन्त्रम् इत्यपि वक्तुं शक्यते । अतः उतमाः शिक्षकाः भवितुं प्रशिक्षणम् अनिवार्यं वर्तते।

# भारतीयभाषासु संस्कृतस्य स्थानम्

**ज्योतिरञ्जन नायकः**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु. 947**

सर्वासां भारतीयभाषाणां कृते संस्कृत भाषा जननीति भारतीय भाषाषु संस्कृतस्य प्रभावः वरीवर्ती त्रिवेणी सङ्गमे सरस्वतीनदी अन्र्तलीना यथास्ति तथैव संस्कृतभाषा सर्वासु भारतीय भाषासु अन्र्तलीना इति सर्वे स्वीकुर्वन्ति। संस्कृतभाषायाः प्रभावः अत्यधिकम् अस्तिति ताभ्यः भाषाभ्यः ज्ञायते । सस्कृतसाहित्यतत्सम्बद्धगाथाः कथाः भारतीयप्रादेशिक भाषासु अनूदिताः। न केवल उत्तरभारते भाषासु अपि च दक्षीणपूर्वभारतीयप्रादेशिकंभाषासु ८०उ अथवा ९०उ पदानि संस्कृतभाषा सम्बद्धान्येव । अतः सर्वाषु प्रादेशिकभाषासु संस्कृतभाषा समुत्पन्ना इति निश्चप्रचं वत्कुं शक्यते । संस्कृतभाषायाः महत्वं सुदीर्घमस्ति । सस्कृतवाङ्मये अनेकानि शास्त्राणि सन्ति । सर्वमेतत् संस्कृतभाषायाः महत्वमावेदयति ।

विश्वस्य समस्तभाषाणां उद्गमः संस्कृत तः ग्रीकतः लैटिनतः मन्यते । संस्कृतम् अनेक भाषाणां जन्मदात्री वर्तते । भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा । संस्कृते संस्कृतिर्ज्ञेया

संस्कृते सकलाष् कलाः ।
सस्कृते सकलं ज्ञानं
संस्कृते किन्न विद्य ते ॥
संस्कृते संस्कृतिर्ज्ञेया
संस्कृते सकलाष् कलाः ।
सस्कृते सकलं ज्ञानं
संस्कृते किन्न विद्य ते ॥

# दिननिशोः लघुमहत्त्वे कारणम्

**अक्षय शिवरामभट्टः**
**शिक्षाशास्त्री प्रथमवर्षम् , अनु.** 825

'दिनं दिनेशस्य यतोऽत्र दर्शने तमी तमोहन्तुरदर्शने सति' इत्युक्तवत् सूर्यस्य दर्शने सति दिनम्, अदर्शने सति रात्रिः इत्युच्यते। एकस्मिन् दिने द्वादशहोरात्मकं दिनं, तावत्प्रमाणमेव रात्रिः इति लोके व्यवहारः। परन्तु वर्षे दिनद्वयमेव एवं भवति। सायनमेषादौ सायनतुलादौ च यदा रविः भवति तदैव द्वादशहोरात्मकं दिनं रात्रिं च भवति।अन्येष दिनेषु दिवामानमथवा रात्रिमानमधिकं भवति। रविः यदा मेषादि षड्राशौ भवति तदा दिवामानमधिकं रात्रिमानं न्यूनं, तुलादौ षड्राशौ यदा रविः भवति तदा रात्रिमानमधिकं दिवामानं न्यूनं च भवति। साक्षदेशेषु इयं व्यवस्था विद्यते। निरक्षदेशेषु दिवामानं रात्रिमानञ्च सर्वदा त्रिंशद् घटिकात्मकमेव (द्वादशहोरात्मकं) भवति।

**साक्षदेशेषु दिननिशोः लघुमहत्वे कारणम्**

निरक्षदेशे यत् क्षितिजवृत्तं भवति तदेव साक्षदेशे उन्मण्डलमिति कथ्यते। उन्मणडलं पूर्वक्षितिजात् अक्षांशतुल्यांशैः ऊर्द्ध्वं भवति, तावद्भिः एव अंशैः पश्चिमक्षितिजात् अवनतं भवति। उन्मण्डलपूर्वक्षितिजयोः मध्ये चरखण्डकालो भवति। चरवशादेव दिननिशोः वृद्धिह्रासौ भवतः। निरक्षदेशे क्षितिजे एव उन्मण्डलं भवति।अतः तत्र चराभावः, तस्मात् तत्र द्युनिशोः समत्वं(12 घण्टात्मकं) भवति।

66 अक्षांशदेशपर्यन्तमेव अहोरात्रस्यमानं 24 होरात्मकं भवति। 66 अक्षांशेभ्यः अधिकाक्षांशदेशेषु राशिचक्रं विपरीतं भ्रमति। अतः रवेः उत्तराक्रान्तिः यावत् लम्बांशाधिका भवति तावत्कालं तत्र सततं दिनमेव, दक्षिणाक्रान्तिः यावत् लम्बांशाधिकाः भवन्ति तावत् तत्र सततं रात्रिरेव भवति। अनेनैव प्रकारेण उत्तरध्रुवप्रदेशे षण्मासं यावत् दिनं, षण्मासं यावत् रात्रिश्च भवति।

# अनुलोमविलोमकाव्यम्

**राज कुमार मिश्रः**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु.** 921

अस्मिन् संस्कृतजगति बहवः कवयः आसन्, इदानीमपि सन्ति अग्रेऽपि भविष्यन्ति च। विद्यमानानां कवीनां नाम तथा कृतीनां विषये मम ज्ञानं तथा नास्ति यथा भूतपूर्वकवीनां विषये अस्माकं ज्ञानं वर्तते। **उपमा कालिदासस्य भारवेरर्थगौरवम् ।**

**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥**

इति श्लोकं कश्चन अजातः एव न जानीयात् । परन्तु एवम् एकं नामास्ति यदस्माभिः प्रायः अश्रुतपूर्वम् । 'वेङ्कटाध्वरी' सप्तदशशताब्देः कविः अस्य जन्म तमिल नाडु प्रदेशस्य काञ्चीपुरनिकटस्थ अरसनिपलाइ मधे अभवत् । चक्षुहीनेनानेन काव्यशास्त्रपण्डितेन प्रायः चतुर्दशग्रन्थाः रतिताः वर्तन्ते । तेषु लक्षीसहस्त्रं महत्वपूर्णमस्ति । जनश्रुतिः अस्ति यत् अस्य रचनानन्तरं तस्य दृष्टिशक्तिः पुनरागता इति । अस्तु इदानीं शीर्षकस्यास्य सार्थकतां प्रतिपादयामः । किमेतत् सम्भवति यत् यदा वयम् एकं पुस्तकं साधारणक्रमेण पठामश्चेद् रामायणस्य कथा तथा च विपरीतक्रमेण पठामश्चेत् कृष्णस्य कथा भविष्यतीति । उत्तरमस्ति आम् । 'राघवयादवीयम् एवमेकं लघुकाव्यं वर्तते यस्य पठनं साधारणक्रमेण क्रियते चेत् रामायणं, विपरीतक्रमेण क्रियते चेत् कृष्णकथा भवति । अतः काव्यमेतत् अनुलोमविलोमकाव्यम् इति प्रसिद्धम् । उदाहरणत्वेन ग्रन्थस्य प्रथमः श्लोकः -

**वन्देऽहं देवं तं श्रीतं रन्तारं कालं भासा यः ।**

**रामो रामाधीराप्यागो लीलामारायोध्ये वासे ॥**

अर्थात् अहं तस्य भगवतः चरणयोः प्रणमामि यस्य हृदि सीता विराजते तथा यः स्वपत्न्याः कृते सहयाद्रीपर्वतानां लङ्घनं कृत्वा लङ ्कां गत्वा रावणं हत्वा वनवासञ्च सम्पूर्णं कृत्वा अयोध्यां प्रति आगतवान् । इदानीम् एनमेव श्लोकम् अक्षरशः विपरीतक्रमेण पठामश्चेत्-

**सेवाध्येयो रामालाली गोप्याराधी मारामोराः**

**यस्साभालङ्कारं तारं तं श्रीतं वन्देऽहं देवम् ॥**

अर्थात् अहं रुक्मिणी तथा गोपीनां पूज्यस्य भगवतः श्रीकृष्णस्य चरणयोः प्रणमामि यः सदा सर्वदा मातालक्ष्म्या सह विराजते तथा यस्य शोभा समस्तरत्नानां शोभायाः हरणं करोति। एवम् अप्रतीम तथा चमत्काररूपेण शब्दानां प्रयोगः संयोजनञ्च केवलं संस्कृतभषायामेव भवितुमर्हति ।

# संसारसरिद्सारे

**रिकु साहा,**
**शिक्षाशास्त्री प्रथमवर्षम्, अनु.** 840

संसारसरिद्सारे आनन्दामृतपारे
पारं प्रभो ! याम कथम् विषयास्मवेगधारे ।।
आदाय भोगभारं पाथेयकसम्भारम्
तितीर्षामः पारं विकला मध्येधारम्
याचामहे आलम्बं निर्भरास्त्वयाधारे
पारं प्रभो! याम कथम्......।।
न जहीमोऽशिवासारान् विनश्वरतनुभोगान्
मरणं न जहात्यस्मान् आसक्तान् अवधानान्
श्रृणुमो नु वाणीं ते रममाणाः संसारे
पारं प्रभो! याम कथम् ...।।
करुणायास्तरणीं ते भगवन् वाञ्छामोऽलम्
आचरेम संरम्भं सन्तारम् उत्थानम्
मतिर्नस्त्वयि सारे करुणा पारावारे
पारं प्रभो ! याम कथम् .....।।

# संघे शक्तिः कलौ युगे

**एस. जि. एलिना पलेइ**
**शिक्षाशास्त्री द्वितीय वर्षम्, अनु.** 948

अस्मिन् कलौ युगे संघे, समूहे, एकतायां वा शक्तिः वर्तते इत्यास्ति अस्याः उक्तेः शब्दार्थ । किन्तु संघस्य एकतायाः चावश्यकता आरम्भिकयुगात् एव दृश्यते न तु कलौ युगे एव एकतायाः शक्तिः महत्वपूर्णा भवति।

मानवः तु एकः सामाजिकः प्राणी अस्ति । सः एकाकी सथातुं नैव शक्नोति। परस्परं मिलित्वा सहयोगेन च सः किमपि महतूवपूर्णं कठिनं वा कार्य कर्तं शक्नोति । परिवारे अपि यत्र एकता भवति तत्र प्रसन्नता सम्पदः च उपतिष्ठति किन्तु अस्याः विषये तु विपदः एव समायान्ति । अपि च परिवारे यत्र एकताया भावाना विद्यते यत्र परिवारजनाः मिलित्वा स्नेहेन ऐक्येन च निवसन्ति, अन्य कः अपि जनः तेषाम अहित भावनायाः विभेति । एवमेव राष्ट्रस्य रक्षा अपि एकताश्रिता भवति।

सर्वाणि कार्याणि सम्पादयितुं संघस्य आवश्यकता सदैव अनैभूयते। संघस्य शक्त्या क्लिष्टं दुष्करमपि वा कार्य सुखेन सम्पाद्यते । न केवलं चेतनेषु एव संघशक्ति दृश्यते अपितु अचतेनेषु अपि संघशक्तेः महत्वम् अस्ति। तृणम् अतिलघु तत्वं भवति किन्तु तृणैः निर्मेतेन रज्जुना मत्ताः गजाः अपि वध्यन्ते । यदा असमाकं देशे संघठनस्य अभावः जातः तदैव विदेशिनः अत्र आक्रमणम् अकूर्वन् देशः च पराधीनः अभवत। यदा च वयं संगठिता आस्म तदा शत्रवः अपि एव अतिष्ठम्। अतः अस्माभिः सर्वैः अपि स्वार्थभावं परित्यज्य ऐक्यभावेन कार्य कर्तब्यम्। **"संघ शक्तिः कलौ युगे"**-इत्यस्य शक्तिसारस्य मत्रस्यावश्यकता तु अस्मिन् वैज्ञानिके कलौ युगे अधिकाधिक संजाता ।

# धर्मशास्त्रम्

**स्वर्णमयी पण्डा**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु. 926**

धर्मशास्त्रम् भारतीयशास्त्रेषु अन्यतमम् । भारतीयपरम्परायाम् अस्य शास्त्रस्य बहुमुख्यं प्राशस्त्यम् अस्ति । धर्मशब्दः 'धृ' धारणे इति धातोः व्युत्पन्नः । तत्र महाभारते 'धारणाद्धर्म इत्याहुः धर्मो धारयते प्रजाः' इति यद् उपवर्णितं तद् धर्मस्य यथार्थस्वरूपं संक्षेपेण प्रतिपादयति । एवं धर्मः समाजस्य धारणं नाम संरक्षणम् संवर्धनं च करोति, अर्थात् समाजकल्याणकारिणीं कामपि जीवनयापनपद्धतिं निर्दिशति । धर्मशब्दः प्रथमतया ऋग्वेदे दृश्यते । अस्मिन् धर्मः इत्येतत् पदं धार्मिकविधिः, व्रतम्, आचारः इत्येतेषु अर्थेषु प्रयुक्तः अस्ति । अन्येषु सन्दर्भेषु धारकः पोषकः इत्येतौ अर्थौ बोधितः धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः।

**धर्मस्य प्रकाराः देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च,**

**जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने ।**

**शरीर-कालधर्माश्च आपद्धर्मास्तथैव च ॥**

**एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः। १।**

देशधर्मः, कुलधर्मः, जातिधर्मः, वयो (आश्रम) धर्मः, गुणधर्मः, शरीर-कालधर्मः, आपद्धर्माश्च धर्मस्य प्रकाराः भवन्ति । वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, नैमित्तिकधर्मः, गुणधर्मश्च धर्मस्य पञ्चप्रकाराः सन्ति इति मनुस्मृतेः टीकाकारः गोविन्दराजः, गौतमधर्मस्य सूत्रस्य टीकाकारः हरदत्तश्च प्रतिपादयन्ति । धर्मशास्त्रम् जनसमूहस्य सम्यक् आचरणव्यवस्था, या महात्मस्य आचार्यस्य वा पक्षतः भवितुं वैधः इति मन्यते। यस्मिन् पुस्तके समाजस्य शासनेन निर्मितनीतिनैतिकतासम्बद्धाः नियमाः सन्ति। यथा मानवधर्मशास्त्रम् । विशेष- हिन्दुनां धर्मशास्त्रं 'स्मृति' इति नाम्ना प्रसिद्धम् अस्ति ।

# पाणिनीयशिक्षा

**बनिता दलाइ**

**शिक्षाशास्त्री द्वितीयवर्षम्, अनु.** 928

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते,
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्,
तस्मात्सांगमधीत्यैव ब्रह्मलोके महीयते॥

अर्थात् शिक्षा वेदस्य घ्राणं, कल्पः हस्तौ, निरुक्तं श्रोत्रम्, व्याकरणं मुखं , छन्दः पादौ, ज्योतिषं चक्षुः च भवति । वेदाङ्गेषु शिक्षायाः महत्वम् वेदमन्त्राणाम् उच्चारणविधेः वर्णनं शिक्षायां समुपलभ्यते। तदुच्यते सायणाचार्यस्य ऋग्वेदभाष्यभूमिकामाम्- **"स्वरवर्णाद्युच्चारणप्रकार: शिक्ष्यते उपदिश्यते वा च यत्र सा शिक्षा " इति** । पाणिनीयशिक्षा शिक्षाग्रन्येषु पाणिनीयशिक्षा अन्यतमा वर्तते । इयं पाणिनीयशिक्षा ऋग्वेदसम्बन्धितास्ति । पाणिनिना रचिता इयं पाणिनीयशिक्षा प्रसिद्धाः लोकप्रिया च वर्तते । लौकिकानां वैदिकानां च शास्त्राणां कृते शिक्षेयं नितान्तमुपयोगित्वेन अधिकं महत्वपूर्णः अस्ति । ग्रन्येऽस्मिन् षष्ठि श्लोका: सन्ति । एतेषु श्लोफेषु उच्चारणविधिसम्बन्धिविषयाणां संक्षिप्तं विवरणं प्रदत्तमस्ति ।

वर्णानां संख्या-

**त्रिषष्ठिश्चतुः षष्ठिर् वा वर्णाः सम्भवतो मता ।**
**प्राकृते संस्कृते चापि स्वयं प्रोक्ता स्वयम्भुवा ॥**

शौरसेन्यादि प्राकृतभाषायां वैदिकलौकिकसंस्कृतभाषायां च ब्रह्मणा स्वयं प्रतिपादिता: वर्णाः यथा सम्भवं त्रिषष्ठिः चतुष्षष्ठिः वा विदुषां सम्मताः सन्ति ।

**वर्णानामुच्चारणस्य नियमाः-**

**"व्याघ्री यथा हरेत् पुत्रान् द्रष्ट्राभ्यां न च पीडयेत् ।**
**भीता पतन भेदाभ्यां तद्वद् वर्णान् प्रयोजयेत् ॥"**

शावको मुखात् पतेत् इति शावकस्य चर्म छिदितं भवेत् । इति च भीताव्याघ्री पुत्रशावकान् येन प्रकारेण द्रष्ट्राभ्यां हरेत्, हरन्ती न च तान् द्रष्ट्राभ्यां पीडयेत् । तेनैव प्रकारेण अकारादिकान् स्वरवर्णान् उच्चारयेत्। उत्तमाधमापाठकयोः लक्षणं-

**गीती शीघ्री शिरः कम्पी तथा लिखितपाठकः ।**
**अनर्थज्ञोल्पकण्ठश्च षडेते पाठकाधमाः ॥**

गीतस्वरेण पठनं, अतिद्रुततया पठनं, शिरकम्पनयुक्ततया पठनं गुरुच्चारणानुच्चारणरहितम् अनभ्यस्तं लिखितं वेदादिकं पठनं अर्थज्ञानशून्यतया दशारामशारा इति न्यायेन पठनं शुष्ककण्ठत्वन्यूनप्राणत्वाऽल्पसामर्थ्यत्वादिदोषयुक्तकण्ठश्चेति षड्विधाः पाठकाः पाठकेषु अधमा ज्ञेया । ग्रन्थान्ते पाणिनेरुल्लेख: दाक्षीपुत्रनाम्ना कृतोऽति-

**शङ्करः शङ्करीं प्रादात् दाक्षीपुत्राय धीमते ।**

**वाङ्मयेभ्यः समाहृत्य देवी वाचमितिस्थिति ॥**

अनेन पाणिनिमतानुयायी कोऽपि वैयाकरण: अस्य उपयोगिनः ग्रन्थस्य निर्माणम अकरोत् । अस्य ग्रन्यस्य उपरि बहुविधा टीका अपि उपलब्धाः भवन्ति । परिमाणे न्यूनत्वेन अपि अस्य सारगर्भिताग्रन्थस्य अनुशीलनेन संस्कृतभाषाया: अस्योपयोगिनो विषयस्य सुष्टु ज्ञानं प्राप्यते ।

# अध्यापनव्रतम्

**अन्मुल झा**

**शिक्षाशास्त्री द्वितीवर्षम्, अनु.** 902

कश्चन तरुणः विद्याभ्यासं समाप्य स्वग्रामम् आगतवान्। ग्रामं प्रति आगमनात् पूर्वं गुरुणा बोधितम् आसीत् -**" स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। प्रतिदिनम् अध्ययनम् अध्यामनं च करणीयम् अवश्यमेव"** इति। अतः ग्रामम् आगतः। सः तरुणः अध्ययनं कुर्वन् यशाशक्ति अध्यापनम् अपि आरब्धवान्। तस्य अध्यापनम् उत्कृष्टं भवति स्म। अतः दिने दिने तस्य कक्षयायां छात्रसङ्ख्या प्रवृद्धा। ग्रामे अन्ये अपि केचन अध्यापयन्ति स्म। अस्य तरुणस्य अध्यापनस्य कारणतः अन्येषाम् अध्यापकानां कक्ष्यासु छात्रसङ्ख्या न्यूना जाता। एतस्मात् अन्ये अध्यापकाः असूयां प्राप्तवन्तः। ते छात्राणां मातापितरौ मिथ्यां वार्ताम् उक्तवा ग्रामे तस्य तरुणस्य विरोधं जनितवन्तः। तदीयां कक्ष्यां प्रति कोऽपि छात्रः यथा न गच्छेत् तथा कृतवन्तः। एकस्मिन् दिने कक्ष्यासमये उपस्थिते अपि कोऽपि छात्रः कक्ष्यायां न दृष्टः। सः तरुणः ज्ञातवान् आसीत् यत् केचन जनाः असूयाम् अनुभवन्तः सन्तिः इति। तेषाम् एव कुतन्त्रस्य फलम् एतत् इति सः अवगतवान्।

छात्रेषु अनागतेषु अपि सः तरुणः अधीरः जातः।कांश्चन शङ्कून् पुरतः संस्थाप्य सः अध्यापनम् आरब्धवान्। द्वित्राणि दिनानि एवमेव प्रवृत्तम्। तदा ग्रामीणाः तस्य अध्यापनश्रद्धाम् असूयाग्रस्तानां कुतन्त्रं च ज्ञातवन्तः। अतः ते सर्वे सम्भूय गत्वा तं तरुणं क्षमां याचन्तः उक्तवन्तः इतः परम् अस्मदीयाः बालाः भवतः कक्ष्यां प्रति नियततया आगमिष्यन्ति। ते भवता एव पाठनीयाः इति। सः तरुणः प्रवृत्तस्य विषये खेदम् अप्राप्य बालानां पाठनं सहर्षम् अङ्गीकृतवान्।शङ्कून् पाठयन् पाठनव्रतं रक्षितवतः सत्य तरुणस्य नाम शङ्ककः इति एव ख्यातम् अभवत्। साहित्यशास्त्रक्षेत्रे तदीयं नाम प्रसिद्धम् अस्ति।

# विज्ञानयुगे शैक्षिकप्रविधेः उपयोगिता

**सरिता दाशः**

**शिक्षाशास्त्री द्वितीवर्षम्, अनु.** 903

अयं विज्ञानयुगः । मानवजीवने विज्ञानस्यावश्यकता बहुधा अनुभूयते । मानवस्य नैकप्रकारकक्रियाकौशलक्षेत्रेषु विज्ञानस्य प्रयोगः एवाधिकतया दृश्यते। तत्रापि आधुनिकक्षेत्रे विज्ञानस्य तथा प्रविधेः च अवसरः अधिकतया वर्तते। समाजे मानवविकासक्रमे ज्ञानस्य समुपयोग एव विज्ञानप्रक्रिया भवति । शिक्ष् धातोः निष्पन्नः शब्दः भवति शिक्षाशब्दः । इमां शिक्षां विना मानवः पशुतुल्य एव भवति। तत्रापि सरलतया अल्पकालेन च उत्पादकतासम्पादने विज्ञानात्मकप्रविधिमुपयुज्य मानवाः सर्वे अग्रगामिणः जायन्ते । तस्यैव प्रविधेः प्रयोगः शिक्षाक्षेत्रे अधिकतया छात्रगुणवत्तासम्पादनाय क्रियते। औपचारिकानौपचारिक -निरौपचारिकशिक्षाप्रक्रियासु सर्वासु च प्रविधेः प्रभावः अनन्यो वर्तते। शिक्षायाः सङ्कुचितार्थं वास्तविकार्थं तथा विस्तृतार्थं च मनसि निधाय शिक्षकाः छात्राः तथा साक्षराः सर्वे प्रविध्युपयोगे कृत्यकृत्याश्च वर्तते ।

**शैक्षिकप्रविधेः उपयोगिता**

अधुना विज्ञानाधारितप्रविधियुगः वर्तते। प्रविधिविज्ञानप्रयोगेण मानवीयसमस्तक्षेत्रेषु अगण्यपरिणामः लक्षितो भवति । सर्वविधकार्याणि मानवेन सरलतया साध्यन्ते । शारीरिककाठिन्यं नानुभूयते । सानन्दं, मनोरञ्जकश्च कार्याणि कर्तुं शक्यते । न केवलं माणवव्यवहारे अपि च कार्यव्यवहारे च परिवर्तनमस्य प्रविधेः प्रधानलक्षणम् ।

**छात्रेभ्यः शैक्षिकप्रविधेः उपयोगिता**

आधुनिकशिक्षाक्षेत्रे प्रविधेः अयोगिता सर्वपेक्षया छात्राय एव । स्पर्धायुतकौशलोपेतशैक्षिकजगति छात्राय प्रविधिरेव मार्गदर्शनं कर्तुमर्हति। शैक्षिककार्येषु अभिरुच्युत्पादने, प्रेरणाप्रदाने,क्रियाशीलत्वसम्पादने, साफल्यप्राप्यये, सरलाधिगमसम्पादने च प्रविधिः छात्राय बहुपकरोति। छात्राः प्रविधिमुपयुज्यापेक्षितरूपेण स्वाध्ययरताश्च भवितुं शक्नुयुः ।

**शिक्षकेभ्यः शैक्षिकप्रविधेः उपयोगिता**

ज्ञानस्य आदानप्रदाने शिक्षाक्षेत्रषु शिक्षकाः एव सेतुवत् कार्यं कुर्वन्ति । ज्ञानस्य सम्प्रेणषणप्रक्रियायां शिक्षकस्य यावान् प्रयासः वर्तते तस्य न्यूनीकरणे प्रविधिरेव सम्प्रति मुख्यसाध्यनं वर्तते। शिक्षकाणां सृजनात्मकतैक प्रविधेः उपयोगे आवश्यकी भवति। विषयसज्जीकरणेन सह विषयावबोधने च शिक्षकाय प्रविधिः मित्रवदाचरति । छात्राः सर्वे यथा

शिक्षकमनुसरेयुः तथा प्रविधिं शिक्षकः अनुसरेत् तथैव प्रविधिः कक्षाप्रकोष्ठं प्रेरयति। शिक्षकस्य प्रतिभायाः विश्वविदिताय प्रविधिः अनुपमं साधनं भवति।

**शिक्षकप्रशिक्षणे शैक्षिकप्रविधेः उपयोगिता-**

शिक्षकप्रशिक्षणं तु भवति छात्राध्यापकान्तर्निहितशिक्षणकोशलानां बहिरानयप्रक्रिया। समस्तप्राणिषु मानवः श्रेष्टः चेदपि मानवेष्वपि बहुषु विषयेषु असमानताः दृश्यन्ते । तादृशासमानताः दूरीकर्तुं प्रविधिरयं सहकुरुते । प्रविधिरयं छात्रनियन्त्रणे, छात्राकर्षणे च शिक्षकप्रशिक्षणे उपकुरुते । इत्यं शैक्षिकप्रविधिः समस्तशैक्षिककार्याणां साफल्याय सम्प्रतिकाले सर्वोत्तमसाधनमिव राराजते।

# वेदवाङ्मयम्

**रञ्जित पटेलः**

**शिक्षाशास्त्री द्वितीवर्षम्, अनु.** 904

ज्ञानमित्यर्थः (विदज्ञाने) वेदशब्दस्य इष्टानिष्टप्राप्तिपरिहारयोः अलौकिकमुपायं यो ग्रन्थो वेदयति स वेद:' (सायणभाष्यम्) वेदः श्रुतिः निगमः आय इति पर्यायपदानि । महर्षिव्यासः अनन्तं वेदराशिं चतुर्धा विभक्तवान् - अवेद यजुर्वेदः सामवेदः अथर्ववेद इति । ततः शिष्येभ्यः पैल-वैशम्पायन-जैमिनि-सुम्मस्तुभ्यःउपदिष्टवान्।एक सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' (ऋग्वेदः) एकमेव परमात्मानं ज्ञानिनः ऋषयः बहुभिः नामभिःआह्वयन्ति, विविधप्रकारेण अनुभवन्ति । प्रतिवेदम् अनेकशाखाः भवन्ति, प्रतिशाखं चत्वारः विभागाः भवन्ति ।संहिता ब्राह्मणम् आरण्यकम् उपनिषत् इति ।सं हिता स्त्रोत्ररूपः वेदभागः। ब्राह्मणम् यागहोमादिकर्मणां वर्णनात्मकः वेदभागः। आरण्यकम् अरण्ये ध्यान-चिन्तन-मननयोग्यः वेदभागः। उपनिषत् जीव-ब्रह्मणोः जगदुत्पत्ति स्थिति विनाशानां च विचारण पूर्ण वेदभागः ।

संहिताभाग: 'मन्त्र' इत्यपि अभिधीयते । प्रत्येक मन्त्रस्य ऋषिः देवता च्छन्दश्च भवति । यथा गायत्रीमन्त्रस्य द्रष्टा विश्वामित्रः ऋषिः, सविता देवता, गायत्री च्छन्दः ।

